# ज्ञानं, सम्पादनीयं तत्

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा।
भवति च भूयान्भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बग्राहेमणिर्न मृदां चयः।।

यथा वृष्टिः पक्षपातं विना जलशिलाभूम्यादिषु समानतया पतति तथैव गुरुः अपि विना पक्षपातं सर्वान् समानतया बोधयति। तथापि तदीयेषु शिष्येषु केचन बुद्धिमन्तः केचन सामान्याः, केचन च मन्दाः। तत्तद्व्यक्तेः ग्रहणसामर्थ्यानुगुणं फलम्। यथा मण्यादयः प्रतिबिम्बं प्रदर्शयन्ति तथा लोष्ठं प्रदर्शयितुं न शक्नोति। कुतः? यतः लोष्ठस्य बिम्बग्रहणसामर्थ्यं नास्ति। एवम् एव शिष्येषु अपि। यः गुरोः पाठं सम्यक् अवगच्छति सः बुद्धिमान् भवति। यथा अवगमनसामर्थ्यं तथा बुद्धिमत्ता भवति।

शिक्षणशब्दः 'शिक्ष-विद्योपादाने' इति धातुतः आगतः। अतः शिक्षणं नाम छात्रेण सम्पादनीयं तत्, न तु गुरुः ददाति। शिक्षाशास्त्रम् अपि एतत् एव तत्त्वं प्रतिपादयति। छात्रस्य विद्याग्रहणे गुरुः साहाय्यं करोति, मार्गम् उपदिशति। अन्ततो गत्वा विद्यायाः अर्जनं तु छात्रस्य एव कार्यम्।

जीवने शिक्षणं निरन्तरं प्रचलति। गृहं, परिसरः, समाजः, इत्यादिभ्यः प्राप्तव्यं बहु भवति। ये महात्मानः लोके प्रसिद्धाः ते शालायां चतसृणां भित्तीनां मध्ये एव बहु विद्याम् अर्जितवन्तः इति न। केचन तु एवं दृश्यन्ते यत् कस्यापि साहाय्ये असत्यपि निरन्तरेण स्वपरिश्रमेण एव प्रगतिं साधितवन्तः।

'आ नो भद्राः क्रतवो यन्तु विश्वतः' इति काचित् वैदिकी सूक्तिः। सर्वाभ्यः दिग्भ्यः ज्ञानं मत्समीपम् आगच्छतु इति एतस्याः अर्थः। लोके ये पशुपक्षिकीटादयः, अचेतनानि वस्तूनि च सन्ति तेषु एकैकः गुणः तु भवति एव। अतः ते अपि गुरवः। ततः अपि ज्ञानं सम्पादनीयम्।

अतः विद्यायाः ग्रहणार्थम् अवकाशाः अनन्ताः। सूक्ष्मावलोकनम्, अविच्छिन्नः प्रयत्नः च एतदर्थम् आवश्यकः। किम् असाध्यं प्रयत्नस्य?

# समासे उत्तरपदे रात्रिशब्दः

शिष्यः- श्रीमन्! यत्र सरस्वत्याः पूजा प्रचल[illegible] सः नवरात्र्युत्सवः, (नवरात्रि + उत्सवः) उत नवरात्रोत्सवः? (नवरात्र + उत्सवः)

आचार्यः- पूर्वपदं 'नव' इति सङ्ख्यावाचकं खलु? तर्हि नवरात्रोत्सवः इत्येव। तन्नाम नवरात्रम् इति रूपम्। नवशब्दस्य नूतनम् इत्यर्थः यदि स्वीक्रियेत तर्हि नवरात्रिः इति रूपं कथञ्चित् साधयितुं शक्येत।

शि - कथम् अपि साधनं तिष्ठतु नाम। व्यवहारे तु 'नव' इत्यस्य सङ्ख्यावाचकत्वम् एव अर्थः। अतः नवरात्रम्, इत्येव रूपम् उचितम् इति मन्ये। किन्तु श्रीमन्! रात्रिशब्दः (रात्रिः) इकारान्तः। नवरात्रम् इत्यत्र तु अन्ते अकारः श्रूयते। एवं तर्हि समासे रात्रिशब्दः अकारान्तः भवति इति अहं भावयामि वा?

आ - समासे सर्वत्र तथा न भवति। 'शिवरात्रिः', 'शुभरात्रिः' इत्यादौ इकारान्तत्वम् एव।

शि - आगता तर्हि समस्या। कुत्र इकारः, कुत्र अकारः इति मां बोधयतु श्रीमन्! चन्दमामापठनसमये तदा तदा 'अर्धरात्रे' 'मध्यरात्रे' इत्यादीनि रूपाणि दृष्टानि। तदानीम् एव एषः सन्देहः उत्पन्नः आसीत् मम मनसि।

आ - इदानीं चर्चा तु तत्पुरुषसमासविषये खलु प्रचलति? (नवरात्रम्, शुभरात्रिः इत्यादौ) अत्र एकं सूत्रं स्मरति चेत् भवान् सुलभतया शुद्धाशुद्धताज्ञानं प्राप्तुं शक्नोति।

शि - किं तत् सूत्रम्?

आ - 'अहःसर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः' इति। एतस्य सामान्यः अर्थः तु– अहः शब्देन, सर्वशब्देन, एकदेशिशब्दैः, (अर्ध– मध्यादिभिः) सङ्ख्यातशब्देन, पुण्यशब्देन, सङ्ख्यावाचकैः शब्दैः (एकं, द्वे, त्रीणि इत्यादिभिः) च यदा रात्रिशब्दः समासं प्राप्नोति तदा अन्ते इकारस्थाने अकारः भवति इति।

'अहोरात्रः' इत्यत्र द्वन्द्वसमासः। इतरत्र तत्पुरषः।

शि - अहोरात्रः? किं तत् रूपं पुल्लिङ्गे?

आ - आम्। सङ्ख्यापूर्वः रात्रिशब्दः केवलं नपुंसके भवति।* अन्ये सर्वे पुल्लिङ्गे एव। पूर्वोक्तसूत्रस्य उदाहरणानि तु क्रमशः – अहोरात्रः, सर्वरात्रः, मध्यरात्रः/अर्धरात्रः, सङ्ख्यातरात्रः, पुण्यरात्रः, नवरात्रम्/पञ्चरात्रम्। तथा च रात्रिशब्दस्य त्रिधा गतिः–

(१) पुल्लिङ्गे अकारान्तः – अहोरात्रः, पुण्यरात्रः इत्यादिषु।

(२) नपुंसके ,, – नवरात्रम्, पञ्चरात्रम् इत्यादिषु (सङ्ख्यापूर्वकत्वे सति)।

(३) स्त्रीलिङ्गे इकारान्तः – शिवरात्रिः, शुभरात्रिः इत्यादौ।

शि - श्रीमन्! 'अहोरात्रं पठति' 'अहोरात्रं कार्यं करोति' इत्यादौ नपुंसकलिङ्गविशिष्टं रूपं श्रूयते खलु?

आ - मन्दबुद्धे! तत्र तु क्रियाविशेषणत्वं खलु तस्य? अतः 'अम्' सहितं (द्वितीयैकवचनरूपविशिष्टम्) नपुंसकं तत्। 'सशब्दं गच्छति' 'साग्रहं वदति' इत्यादिषु अपि एवम् एव खलु? शब्दः इति पुल्लिङ्गे। 'आग्रहः' इत्यपि तथैव। किन्तु क्रियाविशेषणत्वे अन्ते 'अम्' श्रूयते।

शि - क्षाम्यतु श्रीमन्! अविचार्य मया पृष्टम्। अल्पेन चिन्तनेन मया ज्ञातुं शक्यम् आसीत् तत्। 'शुभरात्रिः' 'शिवरात्रिः' इत्यादौ कुतः वा अकारान्तत्वं न?

आ - पुनः अपि तादृशम् एव बालिशं प्रश्नं पृच्छति खलु? मया पूर्वोक्ते सूत्रे शुभशिवादयः शब्दाः न प्रविष्टाः। अतः तथा न भवति इति तु सरलः तर्कः।

शि - क्षाम्यतु, अद्य मम मनःस्थितिः सम्यक् नास्ति। अतः एव एवं पदे पदे प्रमादाः भवन्ति।

---

* सङ्ख्यापूर्वं रात्रं क्लीबम् – गणसूत्रम्।

# चन्दमामा

संस्थापकः- **'चक्रपाणिः'** सञ्चालकः- **'नागिरेड्डी'**

**ये** ये संस्कृतं पठन्ति ते सर्वे प्रायः इच्छन्ति एव संस्कृतोन्नतिम्। समग्रे देशे एवं संस्कृतोन्नतिकांक्षिणः सन्ति। तथापि फलं परिशीलयामः चेत् निराशा एव भवति। एवं तर्हि कुत्र लोपः?

आकांक्षा सर्वत्र दृश्यते, प्रयत्नः अपि तत्र तत्र दृश्यते इति तु सत्यम् एव। किन्तु ते प्रयत्नाः विभक्ताः दृश्यन्ते। मम शाला, मम सङ्घः इत्यादिरूपेण अस्माकं प्रयत्नः दृष्टिः च विभक्ता भवति। एकशक्तिरूपेण वर्धनं न दृश्यते।

तत्तत्परिसरानुगुणं तत्तत्सामर्थ्यानुगुणं च विभिन्नाः संस्थाः कार्यं कुर्वन्ति। अतः कार्यशैल्यां अनुस्रियमाणे मार्गे च भेदः अपि सहजः। किन्तु सर्वेषां अन्तिमं लक्ष्यं तु संस्कृतोन्नतिः एव।

'वयम् अभिन्नाः' इति तु सर्वत्र वचनेषु दृश्यते। व्यवहारे तु विरलतया एव। संस्थायाः अभिनिवेशः, परस्परं संशयदृष्ट्या अवलोकनम् इत्यादयः निरन्तरं प्रचलन्ति। किम् एवं कृत्वा वयं स्वप्नं साकारीकर्तुं शक्नुयाम?

वयम् इव ते अपि कार्यं कुर्वन्ति, मम संस्था इव सा संस्था अपि संस्कृतोन्नत्यै प्रयत्नं करोति इति भावः यदा जागर्ति तदा अहितकरी स्पर्धा निवृत्ता भविष्यति। अन्येन साफल्यं दृष्टं चेत् वयम् अपि सन्तोषम् अनुभवेम।




सम्पुटः- ४ जनवरी-८८ सञ्चिका-१०

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००

रसप्रश्नाः –

# सीतान्वेषणं सुग्रीवसख्यं च

[सीतापहरणानन्तरं अतीव दुःखितः रामः विलपन् सीतान्वेषणम् आरब्धवान्। तत्सन्दर्भे सः सुग्रीवस्य सख्यं प्राप्नोति। रामायणस्य एतत्सन्दर्भम् आधारीकृत्य अधः केचनः प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।]

I सीतान्वेषणपरः रामः कबन्धनामकेन राक्षसेन कुत्र मिलितवान्?

१. दण्डकारण्ये। २. क्रौञ्चारण्ये। ३. पञ्चवट्याम्।

II राक्षसस्य कबन्धस्य शापविमोचनं कदा अभवत्?

१. श्रीरामः शिरच्छेदं यदा कृतवान् तदा।

२. श्रीरामः यदा निखानितवान् तदा।

३. श्रीरामः अग्नौ दाहितवान् तदा।

III शापविमुक्तः कबन्धः सीतान्वेषणार्थं कम् उपायं सूचितवान्?

१. साक्षात् लङ्कायाः उपरि आक्रमणं करोतु इति।

२. सुग्रीवसख्यं सम्पादय तत्साहाय्येन लङ्कां जयतु इति।

३. कार्यसाफल्यार्थं दैवानुग्रहं सम्पादयतु इति।

IV अल्पसत्कारेण अपि श्रीरामं तोषितवती शबरी कस्य महर्षेः शिष्या?

१. मतङ्गमहर्षेः। २. वसिष्ठमहर्षेः। ३. भृगुमहर्षेः।

V रामलक्ष्मणौ दृष्ट्वा हनूमान् कया भाषया सम्भाषणम् आरब्धवान्?

१. प्राकृतभाषया। २. संस्कृतभाषया। ३. पैशाचीभाषया।

VI रामस्य सामर्थ्ये सुग्रीवस्य विश्वासः कदा जातः?

१. सप्तसालभञ्जनस्य दर्शनानन्तरम्।

२. रामेण कृतस्य राक्षसवधादिकस्य श्रवणानन्तरम्।

३. रामस्य आकारस्य दर्शनमात्रेण।

उत्तराणि –

I–२. II–३. III–२. IV–१. V–२. VI–१.

# र स वा र्ताः



## अशनितः मरणं वाक्शक्तिः च!

मध्यप्रदेशे गब्दिग्रामे अशनिपातात् कश्चित् बालकः मृतः। तस्मात् एव अशनिपातात् जन्मना मूकः अपरः बालकः वक्तुं शक्तः अभवत्।

## कोषाधिकारिणः शवस्थानम्!

इजिप्ट्देशीयस्य फरावो टुटाङ्कमन् मन्दिरस्य कोषाधिकारिणः पूजकस्य च मयानामकस्य शवस्थानं, तत्पत्न्याः मेरिट्नामिकायाः शवस्थानं च एषु दिनेषु अन्विष्टः अस्ति। सुप्रसिद्धस्य एतस्य कोषाधिकारिणः शवस्थाने अमूल्यः निधिः स्यात् इति तर्क्यते।





## उन्नतः देवदारुः!

मास्कोदेशे 'भारतोत्सवस्य' आरम्भसन्दर्भे उद्याने देवदारुसस्यम् आरोपितम्। तच्च सस्यं १००० अङ्गुलोन्नतं वर्धिष्यमाणं सत् तस्मिन् उद्याने स्थितानाम् इतरवृक्षणाम् अपेक्षया अपि उन्नतं भवेत् इति विश्वासः अस्ति।

## बन्धनात् भीतः सैनिकः

द्वितीय-जागतिकयुद्धकालीनः कुस्मा पञ्चनुको नामकं ७९ वर्षीयं वृद्धं सैनिकम् उक्रेन् अधिकारिणः अन्विष्टवन्तः सन्ति। 'युद्धे जर्मन्देशीयसैनिकानां वशे भवामि चेत् ते मां सैबीरायां प्रति प्रेषयन्ति' इति भावयन् सः पाकशालायाम् एव तिष्ठन् ४२ वर्षाणि यापितवान्। तदीयाः बान्धवाः एतवत्पर्यन्तम् अपि 'सः मृतः' इत्येव भावितवन्तः आसन्।



# जडभरत:

भरतः नाम राजा वार्धक्ये राज्यं पुत्राणां वशे दत्त्वा वानप्रस्थजीवनं यापयितुम् अरण्यं गतवान्। एकदा सः नद्यां स्नानं कुर्वन् नवजातं हरिणशिशुं दृष्टवान्। तस्य शिशोः माता मृता आसीत्। भरतः तं हरिणशिशुं स्वकुटीरम् आनीय पुत्रवत् प्रीत्या पालितवान्।

मरणसमये अपि सः व्यामोहवशात् हरिणशिशुं स्मरन् एव प्राणान् त्यक्तवान्। तत्कारणतः सः हरिणजन्म प्राप्तवान्। पूर्वजन्मनि हरिणविषयकः व्यामोहः यः आसीत् तद्विषये सः अतीव पश्चात्तापम् अनुभवन् एव तत् जन्म यापितवान्। एतस्य फलरूपेण सः मानवजन्म प्राप्तवान्।

पूर्वजन्मनां स्मरणम् आसीत् इत्यतः सः सर्वेषु विषयेषु निरासक्तः। तस्य निरासक्त्याः पृष्ठभूमिम् अजानन्तः जनाः तं मन्दबुद्धिं कथयन्ति स्म, उपहसन्ति स्म च। विमाता तु तं यथेष्टं पीडयति। विमातुः पीडाम् सोढुम् अशक्तः सः गृहात् निर्गत्य संन्यासिनां गणं प्रविष्टवान्।

तदा तत्र आगताः राजभटाः तं बद्ध्वा नीत्वा राजशिबिकावहने नियोजितवन्तः। एषः तु पादाघातेन पिपीलिका-कीटादयः यथा पीडिताः न भवेयुः तथा जागरूकतया पश्यन् गच्छति स्म। तत्कारणतः शिबिका डोलायते स्म। एतेन कम्पनेन कुपितः राजा तं सम्यक् ताडितवान्। राज्ञः ताडनं सहमानः भरतः पुराणेतिहासादीनां तत्त्वं निरन्तरं वदति स्म। दिग्भ्रान्तः राजा शिबिकातः अवतीर्य तस्य पादयोः पुरतः साष्टाङ्गं नमस्कारं कृतवान्। भरतः तु एतादृशं किमपि अविगणयन् अरण्यं गत्वा तपः आचर्य मुक्तिं प्राप्तवान्।

जीविते सः मानापमानयोः तुल्यः, सुखे दुःखे च समभावम् आपन्नः च आसीत्। अतः तस्य नाम जडभरतः इति अभवत्।





# रोगस्य चिकित्सा

रामनगरे दिवाकरः नाम धनिकः गृहस्थः निवसति स्म। कदाचित् सः रोगपीडितः सन् शय्याम् आश्रितवान्। तस्मिन् नगरे वैद्यस्य शान्तारामस्य प्रसिद्धिः आसीत्। सः एव दिवाकरस्य औषधोपचारं कृतवान्। तेन दिवाकरः स्वस्थः जातः च।

दिवाकरस्य स्वास्थ्यप्राप्तेः अनन्तरम् एकदा शान्तारामः दिवाकरम् उक्तवान्– "भवतः तु विशिष्टः रोगः। मम औषधोपचारेण तात्कालिकम् उपशमनं जातम्। किन्तु सद्यः एव एषः रोगः विषमतां प्राप्नुयात् अपि" इति।

"रोगः विषमतां यथा न प्राप्नुयात् तथा कर्तुं कोऽपि उपायः नास्ति वा?" इति पृष्टवान् धनिकः दिवाकरः।

"कुतो वा न स्यात्? किन्तु चिकित्सार्थं व्ययः तु महान् भवेत्। प्रथमे मासे पञ्चविंशतिसहस्ररूप्यकाणां व्ययः भवेत् प्रायः। द्वितीये मासे दशसहस्ररूप्यकाणां व्ययः। अग्रिममासत्रये अपि प्रतिमासं पञ्चसहस्रं रूप्यकाणि व्ययितानि भवेयुः। अनन्तरं प्रतिमासं सहस्रं यावत् पञ्चमासात्मकः औषधोपचारः भवेत्। अतः एव अहं सन्दिहानः अस्मि" इति।

"एतस्य अयम् अर्थः यत् पञ्चपञ्चाशत् रूप्यकाणि आवश्यकानि इति किल? एषः तु महान् व्ययः" इति उक्तवान् दिवाकरः।

"श्रीमन्! भवान् तु लक्षशः रूप्यकाणि सम्पादयति। आरोग्यसम्पादनार्थं क्रियमाणः एषः व्ययः धनिकस्य भवतः किम् अधिकम्?" इति पृष्टवान् शान्तारामः।

दिवाकरः खेदेन उक्तवान्– "अहं स्वबुद्धिमत्तया यथेष्टं धनं सम्पादितवान् इति तु सत्यम् एव। किन्तु एषु दिनेषु वाणिज्ये मया



विशेषतः हानिः एव अनुभूता। इदानीं तु यावान् आयः तावान् एव व्ययः अपि अस्ति। अतः एकं वर्षं यावत् जागरूकतया व्ययः करणीयः इति निश्चितम् आसीत्। अत्रान्तरे अहं रोगपीडितः जातः'' इतिं।

''भवान् चिन्तां न करोतु। भवतः पुत्रैः सह अहं वार्तालापं करिष्यामि। पितृमोहः तेषां तु भवेत् एव'' इति उक्तवान् वैद्यः।

''वैद्यवर्य! एषु दिनेषु मम पुत्राः एव वाणिज्यभारं निर्वहन्ति। अहं मम सम्पत्तिं भूमिं च तेषाम् आयत्तं कृतवान् अस्मि। ते पितरं मां गौरवेण पश्यन्ति। एतावता अहं सन्तुष्टः। तेभ्यः इतोऽपि अधिका निरीक्षा नास्ति मम। मम शरीरे इदानीं शक्तिः अस्ति वा न वा इति अहं न जानामि। तथापि अहं पुनः अपि वाणिज्यप्रपञ्चं प्रविशामि। अल्पे समये यदि पर्याप्तं धनं सम्पादयितुं शक्नुयां तर्हि भवतः चिकित्साद्वारा एतस्य शरीरस्य रक्षणार्थं प्रयत्नं करिष्यामि'' इति उक्तवान् दिवाकरः।

''श्रीमन्! मम वचनेषु उपेक्षा मास्तु। एतावत् तु निश्चयेन वदामि यत् अचिरात् योग्या चिकित्सा यदि न क्रियेत तर्हि भवान् बहूनि दिनानि न जीवति। भवान् सद्यः धनार्जने उद्युक्तः भवति चेत् चिकित्सार्थं विलम्बः भविष्यति एव। तस्य परिणामः तु घोरः'' इति शान्तारामः परिस्थितेः स्पष्टं चित्रणं दत्तवान्।

''चिकित्सया मम रोगं निवारयितुं शक्यते इति भवतः विश्वासः दृढः यदि स्यात् तर्हि अद्य एव चिकित्सायाः आरम्भं करोतु भवान्। प्रतिफलरूपेण अहं षण्मासानन्तरं लक्षं रूप्यकाणि भवते दास्यामि'' इति उक्तवान् दिवाकरः।

''एकं लक्षं रूप्यकाणि! किं भवान् षण्मासाभ्यन्तरे तावन्ति रूप्यकाणि सम्पादयेत् वा?'' इति आश्चर्येण पृष्टवान् शान्तारामः।

''साधारणः वैद्यः भवान् एव दशसु मासेषु पञ्चपञ्चाशत् सहस्रं रूप्यकाणि यदि सम्पादयेत् तर्हि समर्थः वणिक् अहं षण्मासाभ्यन्तरे एकं लक्षं रूप्यकाणि सम्पादयितुं न शक्नुयां वा?'' इति प्रतिप्रश्नं

कृतवान् धनिकः दिवाकरः।

वैद्यः शान्तारामः तस्मात् एव दिनात् स्वचिकित्साम् आरब्धवान्। एकस्य मासस्य अनन्तरं सः धनिकं दिवाकरम् उक्तवान्– "श्रीमन्! दशसहस्रं रूप्यकाणि दत्तानि स्युः चेत् उपकृतः भवेयम्" इति।

"वैद्यमहाशय! षण्मासात्मकस्य अवधेः अनन्तरं युगपत् एव अहं लक्षं रूप्यकाणि दास्यामि" इति उक्तवान् दिवाकरः।

"किन्तु श्रीमन्! गृहे इदानीं धनस्य आवश्यकता महती दृश्यते इति उक्तवान् वैद्यः।

तदा दिवाकरः पुनः उक्तवान्– "कीदृशी आवश्यकता सा। मां वदतु। यदि शक्यम्, अहं परिहारोपायं सूचयिष्यामि" इति।

"यदा अहं मम पुत्र्याः कमलायाः विवाहं कृतवान् तदा वरदक्षिणारूपेण मया दशसहस्रं रूप्यकाणि दातव्यानि आसन्। किन्तु तदा अहं दातुं न शक्तवान्। अतः मम पुत्र्या प्रतिदिनं कटुवचनं श्रोतव्यम् आपतितम्। इदानीं तस्याः पुत्री प्राप्तवयस्का। सा निवेदयति यत् दातव्यानि दशसहस्रं रूप्यकाणि भवान् ददाति चेत् अहं मम पुत्र्याः विवाहं निर्वर्तयामि इति। अतः अहं कष्टे अस्मि" इति।

"भोः! भवतः पुत्रस्य चन्द्रकान्तस्य पुत्रः दीपकः इदानीं विवाहयोग्यः अस्ति खलु। कमलायाः पुत्र्याः दीपकस्य च विवाहः भवतु।



भवन्तः वरदक्षिणां मा स्वीकुर्वन्तु" इति सूचितवान् दिवाकरः।

"मम अपि एतत् इष्टकरम् एव। किन्तु मम स्नुषा पुत्रस्य विवाहसन्दर्भे वरदक्षिणाम् इच्छति। अन्यच्च चन्द्रकान्तः सपत्नीकः इदानीम् अन्यस्मिन् गृहे निवसति, न तु मया सह" इति असहायकतां प्रकटितवान् शान्तारामः।

"ओह्! एतावदेव खलु! भवान् सर्वान् वदतु यत् षण्मासानन्तरम् अहं दिवाकरः लक्षं रूप्यकाणि दास्यामि इति उक्तवान् इति। तदा पुत्रः सकुटुम्बं भवता सह एव निवासं करिष्यति" इति सूचितवान् दिवाकरः।

दिनद्वयस्य अनन्तरं शान्तारामः उत्साहेन दिवाकरस्य गृहं गत्वा उक्तवान्– "श्रीमन्!



भवान् यथा सूचितवान् तथैव प्रवृत्तम्। चन्द्रकान्तः सकुटुम्बं मम गृहे एव निवसति। स्नुषा अपि कमलायाः पुत्रीं स्वस्नुषात्वेन आनेतुम् अङ्गीकृतवती!" इति।

दिवाकरः सर्वं श्रुत्वा मन्दहासं प्रकटितवान्, तावदेव।

एकः मासः अतीतः। शान्तारामः पुनः अपि दिवाकरं धनं पृष्टवान्।

"वैद्यवर्य! इदनीं पुनः कीदृशी आवश्यकता आगता भवतः गृहे?" इति पृष्टवान् दिवाकरः।

"श्रीमन्! मम पत्नी इदानीम् आभरणनिमित्तं माम् अहोरात्रं पीडयति। लक्षं रूप्यकाणि प्राप्यन्ते इति श्रुत्वा सर्वे स्वकीयां विलक्षणाम् अपेक्षां प्रकटयन्तः सन्ति" इति उक्तवान् शान्तारामः।

"आर्य! भवान् आयस्य अपेक्षया अपि अधिकं व्ययं चिन्तयन् अस्ति इति मम अभिप्रायः। भवान् स्वभविष्यतः विषये किमपि चिन्तितवान् वा? अहम् अद्यैव लक्षं रूप्यकाणि दत्तवान् इत्येव भावयेम। तदानीम् अपि किं भवेत्? चन्द्रकान्तः तत्र कञ्चन भागं स्वीकरिष्यति। पत्नी कानिचन आभरणानि कारयिष्यति। भवतः गृहस्य कश्चन भागः नूतनतया निर्मीयते। भवान् पूर्वतनम् ऋणं प्रत्यर्पयिष्यति। एतदनन्तरम् अपि भवान् जीवति खलु? तदा कथं जीवननिर्वहणम्?" इति पृष्टवान् दिवाकरः।

तदा खेदं प्रकटयन् उक्तवान् शान्तारामः– "भवान् सत्यम् एव उक्तवान्। अनन्तरं पुनः कष्टं सोढव्यम् एव" इति।

"एतावता सिद्धं यत् वैद्यकीयवृत्त्या भवतः जीवननिर्वहणं कष्टकरम् एव इति। अतः भवान् भवतः पुत्रं सूर्यप्रकाशं वाणिज्ये योजयतु। यदि सः धनसम्पादने व्यग्रः भवति तर्हि स्वयं सन्मार्गे आगमिष्यति" इति सूचितवान् दिवाकरः।

"तं यदि वाणिज्ये नियोजयेम तर्हि लाभप्राप्तिः दूरे तिष्ठतु, मूलधनस्य अपि नाशः भवेत् इति मम भीतिः" इति आशङ्कां प्रकटितवान् वैद्यः।

तदा दिवाकरः मन्दहासं प्रकटयन्



उक्तवान्– "भवतः पुत्रः सूर्यप्रकाशः स्वभावेन दुष्टः दुर्व्यसनी च न खलु? तथापि एवं करोतु – रत्नसेनं भवान् जानाति खलु? सः निर्धनः युवकः, सूर्यप्रकाशस्य आत्मीयः स्नेहितः च। सः परिश्रमशीलः बुद्धिमान् च। अतः भवान् भवतः कनिष्ठपुत्रीं सरलां तस्मै ददातु। तं जामातरं गृहे एव स्थापयतु च। सूर्यप्रकाशः रत्नसेनः च सम्भूय वाणिज्यस्य आरम्भं कुरुताम्" इति।

"भवतः वचनं स्वीकारार्हम् एव। किन्तु वाणिज्यार्थं मूलधनम् आवश्यकम् एव खलु? अतः तथा मूलधनस्य नियोजनार्थं वा भवान् किञ्चित् धनं ददातु" इति अपेक्षां प्रटितवान् वैद्यः।

"वैद्यवर्य! भवतः गृहे पञ्चाशत्गोणीमितानि धान्यानि द्विशतं नारिकेलफलानि च सन्ति खलु इदानीम्? तानि नारायणपुरं प्रति साप्ताहिकवाणिज्यार्थं नयन्तु। नयनार्थम् अल्पः व्ययः भवेत्। तथापि चिन्ता मास्तु। तत्र द्विगुणितं मूल्यं लभ्यते। यदि एषः व्यवहारः लाभदायकः भवेत् तर्हि रत्नसेनं सूर्यप्रकाशं च सूचयतु यत् अन्येभ्यः अपि वस्तूनि क्रीत्वा नारायणपुरे विक्रयणं कुरुताम् इति। मम तु विश्वासः यत् रत्नसेनः एतं व्यवहारं समर्थतया निर्वहेत् इति" इति सूचितवान् दिवाकरः।

दशदिनानाम् अनन्तरं वैद्यः शान्तारामः प्रसन्नः सन् दिवाकरस्य समीपम् आगतवान्, उक्तवान् च– "भवतः दूरदृष्टिपूर्णा सूचना सफला जाता। सूर्यप्रकाशः एतेन कार्येण सन्तुष्टः। रत्नसेनेन मिलित्वा एतत् वाणिज्यं सः वर्धयितुम् इच्छति च" इति।

पुनः एकः मासः अतीतः। वैद्यः पुनः अपि दिवाकरं धनं पृष्टवान्।

दिवाकरः मन्दं हसन् उक्तवान्– "वैद्यमहोदय! भवान् एतावता एव ज्ञातवान् स्यात् यत् निश्चितावधितः पूर्वम् अहं कथम् अपि धनं न दास्यामि इति। तथापि पुनः पुनः किमर्थं धनं पृच्छति? भवतः धनतृष्णा आगता। यस्य तृष्णा विशाला सः सुखं द्रष्टुं न शक्नोति" इति।

"मम समीपे धनं न भवति चेत् पत्नीपुत्रादयः मम आदरं न कुर्वन्ति। अतः



अहं धनं पृच्छन् अस्मि'' इति उक्तवान् वैद्यः शान्तारामः।

''धनकारणतः ये बान्धवाः आदरं प्रकटयन्ति ते वस्तुतः अस्माकं बान्धवाः एव न। एतादृशानां निमित्तं धनसङ्ग्रहणम् अपि व्यर्थम्। भवान् तु वैद्यः। जीवनार्थं वृत्तिः अन्वेष्टव्या नास्ति। अतः अन्येषां साहाय्यं करोतु। तदा जनाः भवतः आदरं कुर्वन्ति गुणकारणतः, न तु धनकारणतः'' इति उक्तवान् दिवाकरः।

एकः मासः पुनः अपि अतीतः। वैद्यः दिवाकरम् उक्तवान्– ''श्रीमन्! भवतः वचनं सत्यम् एव। अहम् अल्पेन धनेन चिकित्सायाः आरम्भं कृतवान्। निर्धनेभ्यः किञ्चित् अपि धनं न स्वीकरोमि। ग्रामीणाः माम् आदरेण पश्यन्ति। एतेन अहम् अतीव सन्तुष्टः अस्मि। किन्तु मम परिवारजनाः भवता दीयमानस्य धनस्य निरीक्षायां सन्ति'' इति।

''एवं चेत् भवान् कालान्तरे वा अपायं सम्मुखीकुर्यात् एव। अतः भवान् परिवारसदस्यान् वदतु– 'दिवाकरः वञ्चनां कृतवान्। धनं न दास्यामि इति उक्तवान्' इति। एतत् ज्ञात्वा अपि ये भवता सह तिष्ठन्ति से एव वस्तुतः बान्धवाः'' इति सूचितवान् दिवाकरः।

''एवं करोमि चेत् मदीयः इति कः भविष्यति?'' इति आतङ्केन पृष्टवान् शान्तारामः।

''भोः, भवान् पुत्र्यै यत् दातव्यम् आसीत् तं व्यवहारं समापितवान्। वरदक्षिणादानं विना एव कनिष्ठपुत्र्याः कृते उत्तमः वरः अपि प्राप्तः। निरर्थकम् अटन् स्थितः पुत्रः वाणिज्ये नियोजितः अपि। इतःपरं भवतः का समस्या? अतः बान्धवाः दूरं गताः चेत् का विशेषहानिः भवतः? ग्रामीणाः भवन्तं प्रीत्या पश्यन्ति खलु?'' इति उक्तवान् दिवाकरः।

गृहम् आगतः शान्तारामः परिवारसदस्यान् उक्तवान्– ''दिवाकरः मां वञ्चितवान्। सः लक्षं रूप्यकाणि न दास्यति'' इति। एतस्य परिणामतः पुत्रस्य चन्द्रकान्तस्य पत्नी कुपिता। 'स्नुषां मातृगृहं प्रतिप्रेषयिस्यामि' इति गर्जनं कृतवती सा।

किन्तु तदीयः पुत्रः दीपकः स्वपत्न्यां नितराम् अनुरक्तः। सः मातरं पितरं च स्पष्टम् उक्तवान् यत् एवं चेत् मम पत्न्या सह इतः निर्गत्य अहम् अन्यत्र निवसामि इति। अतः तत्र किमपि न प्रवृत्तम्।



पुनः अपि एकः मासः अतीतः। दिवाकरः वैद्यं शान्तारामम् आहूय स्पष्टैः वचनैः उक्तवान्– "वैद्यमहाशय! चिकित्सानिमित्तम् अहम् एकां वराटिकाम् अपि भवते न दास्यामि" इति।

"किं? किं? भवान् मां वस्तुतः अपि वञ्चयितुम् इच्छति एव!" इति आश्चर्येण पृष्टवान् शान्तारामः।

"वञ्चना मया न कृता। भवान् एव मां वञ्चितवान्। अहं केनचित् सामान्येन रोगेन पीडितः आसम्। भवतः औषधेन स्वस्थः जातः आसम् अपि। किन्तु तदनन्तरं भवान् मां भीकरव्याधिना ग्रस्तम् उक्तवान्। मां वञ्चयितुं प्रयत्नं कृतवान्। प्रतिक्रियारूपेण अहम् अपि धनदानस्य प्रलोभनं भवते प्रदर्शितवान्" इति उक्तवान् दिवाकरः।

"श्रीमन्! वस्तुतः अपि भवान् तीव्रेण व्याधिना पीडितः आसीत्। मम औषधप्रभावतः अद्य स्वस्थः इव दृश्यते" इति उक्तवान् वैद्यः।

दिवाकरः अन्तः गत्वा काश्चन कूपिकाः आनीय शान्तारामाय प्रदर्शयन् उक्तवान्– "भवान् यानि औषधानि मह्यं दत्तवान् तानि सर्वाणि अत्र एव सन्ति। मया एकम् अपि औषधं न स्वीकृतम्" इति।

वैद्यस्य शान्तारामस्य मुखं विवर्णं जातम्। सः क्षीणेन स्वरेण दिवाकरं पृष्टवान्– "अहं अविद्यमानस्य रोगस्य निमित्तम् औषधानि यच्छन् अस्मि इति भवान् पूर्वम् एव ज्ञातवान्। तथापि किमर्थम् औषधसेवनम् अभिनीतवान्?" इति।

दिवाकरः उच्चैः हसन् उक्तवान्– "भवान् सज्जनः इति अहं जानामि। भवान् मत्तः पञ्चपञ्चाशत् सहस्रं रूप्यकाणि प्राप्तुं प्रयत्नं कृतवान्। एतस्य अयम् अर्थः यत् भवतः धनस्य आवश्यकता महती इति। अतः एव अहं भवतः समस्यानां विषये तदा तदा पृष्टवान्। वस्तुतः धनाभावः न महती

समस्या। वयं तां महतीं भावयामः। तृष्णावशात् विनायासम् अन्यतः धनं प्राप्तुं प्रयत्नं कुर्मः। श्रद्धया प्रयत्नः कृतः चेत् परिहारमार्गः स्वयं स्फुरति। यः तृष्णायाः वशं गच्छति सः कदापि सुखं प्राप्तुं न शक्नोति'' इति।

दिवाकरस्य विषये एषु दिनेषु शान्तारामस्य श्रद्धा उत्पन्ना आसीत्। इदानीं तु तस्मिन् विवेकः उदितः। सः नमस्कारपूर्वकं दिवाकरम् उक्तवान्– ''अद्यावधि अहम् आत्मानं वैद्यं, भवन्तं च रोगिणं भावयन् आसम्। अद्य मया ज्ञातं यत् अहम् एव रोगी इति। भवान् अपूर्वां चिकित्सां कृतवान्'' इति।

दिवाकरः मन्दहासपूर्वकम् उक्तवान्– ''भवान् सत्यदर्शनं प्राप्तवान्। एतेन अहं नितरां सन्तुष्टः। अहं चिन्तनशीलः आत्मविश्वासी च पुरुषः। भवान् सामान्यः गृहस्थः इति अहं पूर्वम् एव जानामि स्म। अमूल्यानाम् औषधानां निर्माणार्थम् अधिकं धनम् आवश्यकं भवति। यः भवान् दैनन्दिनभोजनार्थम् अपि कष्टम् अनुभवति तादृशः व्ययकारि औषधं कथं वा सज्जीकुर्यात्? एतदाधारेण एव अहं ज्ञातवान्– 'मत्तः धनं सङ्ग्रहणीयम् इति भवान् मां रोगग्रस्तम् उक्तवान्' इति। यदि कोऽपि दुर्बलहृदयी स्यात्, तर्हि सः भवतः वचनं सत्यं मन्यमानः मानसिकरोगेण पीडितः सन् अविद्यमानस्य अपि रोगस्य आहारःभवेत्। अहं तु विवेकबलात् आत्मानं रक्षितवान्। जीवने प्रधानं धनं न, अपि तु मानवता। एषः विषयः सम्यक् ज्ञातः अनुष्ठितः च चेत् धनं स्वयम् अस्मान् अनुसरति'' इति।

अनन्तरं दिवाकरः वैद्याय उपायनरूपेण दश सहस्रं रूप्यकाणि दत्तवान्। वैद्यः शान्तारामः पूर्वापेक्षया अपि अधिकश्रद्धया निर्धनानां सेवां कर्तुम् आरब्धवान्। एतेन तस्य गौरवम् अपि प्रवृद्धं, धनम् अपि स्वयं तत्समीपम् आगच्छत्।





# सुवर्णखनी

सहस्रशः वर्षेभ्यः पूवम् अस्यां भूमौ अरण्यानि महापर्वताः च अधिकसङ्ख्यया आसन्। तेषां मध्ये सुवर्णखनीनामकं राज्यम् आसीत्।

एतत् सुवर्णखनीराज्यं परितः पर्वतश्रेणयः एव आसन्। तेषु पर्वतेषु आकाशचुम्बिनः वृक्षाः यथेष्टम् आसन्। वृक्षबाहुल्यात् तेषु अरण्येषु मध्याह्ने अपि सूर्यातपः भूमिं न स्पृशति।

एतस्मिन् सुवर्णखनीराज्ये जनाः परम्परागतवृत्त्यनुगुणं कार्यं कुर्वन्तः यावत् लब्धं तावता एव तृप्तिम् अनुभवन्तः सुखेन आसन्।

किन्तु एतस्मात् स्वभावात् भिन्नाः अपि तस्मिन् राज्ये न आसन् इति न। इतोऽप्यधिकसुखाभिलाषिणः, श्रमं विना एव धनं प्राप्तुम् इच्छन्तः अपि केचन आसन्। तादृशेषु मुख्याः तद्देशीयः राजा, तदास्थाने स्थिताः राजोद्योगिनः च। तेषां सम्बन्धिनां स्वभावः अपि तादृशः एव आसीत्।

प्रजानां योगक्षेमस्य परिशीलनार्थं राजा कांश्चन जनान् नियुक्तवान् आसीत्। तादृशाः परस्परं सम्भूय निश्चितवन्तः यत् महाराजस्य क्षेमः एव देशस्य क्षेमः इति। एतं विचारं श्रुत्वा राजा अपि तेषां बुद्धिमत्ताविषये अतीव सन्तुष्टः। ते एतावत्पर्यन्तं ज्ञानिशब्देन आहूयन्ते स्म। राजा तत् नाम 'महाज्ञानिनः' इति परिवर्तितवान्। एते महाज्ञानिनः यत् वदन्ति तदेव सर्वोत्कृष्टम् इति महाराजस्य दृढः विश्वासः।

मनोज् दास



कदाचित् ते महाज्ञानिनः स्वसमावेशे निश्चितवन्तः यत् महाराजस्य भोगसाधनानि यथेष्टं सन्ति चेदपि मनोविनोदस्य न्यूनता अस्ति इति। अतः ते 'अद्य आरभ्य आस्थानगायकाः शीर्षासनं कुर्वन्तः गायेयुः' इति नियमं कृतवन्तः।

राजाश्रयाभावे गायकानां जीवनं कष्टकरं खलु? अतः ते गायकाः कथञ्चित् शीर्षासनेन स्थित्वा गायनस्य अभ्यासं कृतवन्तः। एवं गायनसमये ते श्वासोच्छ्वासार्थं यदा महत् कष्टम् अनुभवन्ति तदा राजा आतृप्ति हसति।

राजा एतादृशः विलक्षणः। एतद्देशीयाः जनाः तु एतादृशव्यवहारे तटस्थाः सन्तः शान्ततया जीवन्ति। दुर्गस्य पृष्ठतः स्थितां पर्वतश्रेणिं दृष्ट्वा दीर्घं निःश्वसन्ति ते। तस्य पर्वतस्य कारणतः एव तद्देशस्य नाम सुवर्णखनी इति जातम्। सुवर्णखनीदेशस्य प्रजासु केचन केवलं सुवर्णं सम्यक् जानन्ति। सामान्याः तु सुवर्णं नाम्ना जानन्ति।

सुवर्णखनीदेशे काचित् कथा सर्वत्र श्रूयते स्म। पूर्वं तस्मिन् पर्वतप्रान्ते एका सुविशाला सुवर्णखनी आसीत्। तत्समये एतं देशं धार्मिकः, सुगुणी, सुशीलः कश्चन राजा पालयन् आसीत्। सः स्वयं शिल्पी, चित्रकारः च। तपोध्यानादिषु अपि तस्य प्रवृत्तिः आसीत्।

कदाचित् यदा सः ध्यानमग्नः आसीत् तदा सः अधिष्ठात्र्याः देवतायाः अनुग्रहेण सुवर्णखनीप्रदेशं ज्ञातवान्।

अनन्तरं सः एकाकी एव सुवर्णखनीं गत्वा सुवर्णम् आनीय, तेन एकं सुन्दरं स्त्रीविग्रहं निर्मितवान्। शुभे मुहूर्ते स च विग्रहः सर्वेषां दर्शनार्थं सार्वजनिके स्थले स्थाप्यते इति वार्ता राज्ये श्राविता।

किन्तु तस्य सुशीलस्य राज्ञः मन्त्री महादुष्टः। सः महाराजस्य पूर्वोक्तम् अभिलाषं निर्दयं नाशितवान्।

एतत् राज्यं, सा सुवर्णखनी च वशीकरणीयम् इति मन्त्रिणः मनसि प्रबला ईच्छा आसीत्। अतः सः प्रातिवेशिकराजस्य मैत्रीं सम्पाद्य तद्द्वारा मध्यारात्रसमये आक्रमणं कारितवान्।

दुर्गरक्षकाः भटाः शौर्येण युद्धम् आरब्धवन्तः। अतः कथम् अपि दुर्गं शत्रुवशं न जातम्। युद्धं सुदीर्घं प्रवृत्तम्।

अत्रान्तरे एका अपूर्वा घटना प्रवृत्ता। तत्प्रान्ते भूकम्पः जातः। दुर्गस्य पार्श्वे स्थितः पर्वतः द्विधा विभक्तः जातः। पर्वतस्थानां शिलानां पतनेन क्षणाभ्यन्तरे दुर्गम् उद्ध्वस्तं जातम्।

युद्धरताः सर्वे मरणं गताः। मन्त्री, तेन सह आगताः सेनापतयः चापि प्राणैः वियुक्ताः अभवन्।

सूर्योदयसमये 'शिल्पचतुरेण महाराजेन निर्मितः सुवर्णमयः स्त्रीविग्रहः अदृश्यतां गतः' इति वार्ता प्रसृता। महाराजः अपि अदृश्यतां गतः आसीत्। जनाः परस्परं वदन्ति स्म यत् सुवर्णविग्रहः मृत्तिकायाः अधः निलीनः, राजा च कुत्रापि पलायितवान् इति। राज्ञः मरणं तु कोऽपि कल्पयितुम् अपि न शक्नोति।

केषाञ्चित् वर्षाणाम् अनन्तरम् अरण्यात् आगताः केचन उक्तवन्तः यत् महाराजसदृशः संन्यासी अस्माभिः दृष्टः इति। किन्तु तेन संन्यासिना सह वार्तालापं कोऽपि न कृतवान् आसीत्।

अन्ये केचन भावयन्ति स्म – राजा एतं पर्वतप्रदेशम् अतिक्रम्य समुद्रम् उद्दिश्य गतवान् इति। किन्तु कोऽपि तेन मार्गेण न गतवान् आसीत्।



यदि कोऽपि तेन मार्गेण गच्छेत् तर्हि सः न प्रत्यागच्छेत् इति जनानां विश्वासः। 'सः तेन मार्गेण गतः, तत्रैव मृतः' 'एषः गतः, न प्रत्यागतः' इत्यादयः कथाः तु बह्व्यः आसन्।

दुष्टस्य मन्त्रिणः मारणकारणतः सुवर्णखनीराज्यं तत्साहाय्यकर्तुः प्रतिवेशिराजस्य अधीने आगतम्। सः सुवर्णखनीराज्यस्य प्राकृतिकसौन्दर्येण आकृष्टः अभवत्। सुवर्णस्य व्यामोहः तु आसीत् एव। सुवर्णराशिः प्राप्तव्यः चेत् तत्प्रदेशस्य समीपे एव स्थातव्यम् इति तस्य विचारः।

अतः सः स्वकीये राज्ये अनुजं नियोज्य प्राचीनराजधान्याः समीपे एव अपरं



राजभवनं निर्माय तत्र निवासम् आरब्धवान्।

भूकम्पकारणतः पतितां दुर्गभित्तिं राजभवनं च लतावृक्षगुल्मादयः आक्रान्तवन्तः। जनाः तत्प्रदेशे सञ्चारं कर्तुं भीतिम् अनुभवन्ति स्म। विषसर्पाणां व्याघ्रभल्लूकादीनां च निवासस्थानम् आसीत् स च प्रदेशः। दिने अपि पिशाचादयः तत्र सञ्चरन्ति इति किंवदन्ती अपि आसीत्।

किन्तु विनोदनामकः युवकः तत्प्रदेशे निर्भयं सञ्चरति स्म। तदीये बाल्ये एव माता दिवंगता आसीत्। पिता तु सदा कार्यव्यापृतः। पुत्रस्य व्यवहारविषये सः सर्वथा उदासीनः। अतः विनोदः दुर्गमान् प्रदेशान् पश्यन् स्वेच्छया सञ्चरति स्म। व्याघ्रादिभ्यः तस्य भीतिः सर्वथा न आसीत्। 'यदि वयं तान् न पीडयामः, तर्हि तेऽपि अस्मान् न पीडयन्ति' इति वदति स्म विनोदः।

एकदा सायङ्कालसमये पश्चिमा दिक् रक्तच्छायां प्राप्तवती। वायुः चण्डः जातः। अरण्यस्थाः पशुपक्षिणः गर्जन्तः आक्रन्दनम् आरब्धवन्तः। झञ्झावातः तत्र सर्वत्र व्याप्तः। गडगडेति, चटचटेति च विचित्राः शब्दाः उत्पन्नाः।

स च कश्चन भूकम्पः। क्षेत्रेषु कार्यरताः, मार्गेषु सञ्चाररताः च जनाः इतस्ततः धावितवन्तः। एकः अपरेण घट्टितः भवति। पतितस्य उपरि अन्यः पादं स्थापयति। अग्रे गमनार्थं मार्गम् अपश्यन् कश्चित् रोदिति।

प्राचीनदुर्गप्रदेशः भूकम्पनस्य केन्द्रबिन्दुः। ततः उद्गताः शिलाः नूतनदुर्गस्य उपरि पतिताः। एतेन नूतनं दुर्गम् अपि तत्र तत्र पतितम्।

राजा तु किङ्कर्तव्यतामूढः जातः। महाज्ञानिनः त्वरया एकत्रीकृत्य सः उक्तवान्– "अस्मदीयम् एतत् दुर्गं पतितम्। एवं तर्हि एतस्य दुर्गस्य निर्मातॄणां शिरांसि अपि पतेयुः एव खलु? महाज्ञानिनः भवन्तः किं वदन्ति एतद्विषये?" इति।

तदा मन्त्री उक्तवान्– "राजाधिराज! एतस्य दुर्गस्य निर्मातारः प्राचीनाः। तेषां शिरांसि तु इतःपूर्वम् एव पतितानि" इति।

तदा राजा कोपेन मन्त्रिणं पश्यन्– "तथा भवतु, किं तेन? ऋणस्वीकर्ता मृतः चेत्

तदुत्तरदायिनः खलु ऋणं प्रत्यर्पयेयुः? एवम् एव अत्रापि। किम् एतं सरलं तर्कम् अपि अहं न जानामि इति भावयति वा भवान्?" इति पृष्टवान्।

"प्रभो! तथा न मन्तव्यम्। भवान् तु सर्वज्ञः। वयं महाज्ञानिनः। भवान् तु महोन्नतज्ञानी। भवता अविदितः विषयः कः अस्ति?" इति विनयेन उक्तवान् मन्त्री।

पूर्वप्रस्तुतस्य विनोदस्य प्रपितामहः दुर्गनिर्माणसन्दर्भे विशेषतः कार्यं कृतवान् आसीत्। अतः भटाः गत्वा तत्कुलोत्पन्नं विनोदस्य पितरं बद्ध्वा आनीय महाराजस्य पुरतः स्थापितवन्तः।

"एतस्य शिरच्छेदं कुर्वन्तु" इति आज्ञापितवान् राजा। तदा आस्थानिकेषु अन्यतमः उत्थाय विनयेन उक्वान्– "प्रभो! समग्रं दुर्गम् एव नष्टम् अस्ति। विशालस्य दुर्गस्य नाशनिमित्तम् एतस्य लघुशिरसः छेदनं कथं युक्तं भवेत्?" इति।

"तर्हि किम् अन्यत् करणीयम् इति भवान् चिन्तयति?" इति पृष्टवान् राजा।

"सहस्रं वर्षाणि यावत् तं कारागारे स्थापयतु। सम्यक् वेदनाम् अनुभवतु सः" इति सूचितवान् सः राजोद्योगी।

राजा सन्तोषेण करताडनं कुर्वन्– "अहो! अपूर्वा योजना! सहस्रवर्षात्मकः कारागारवासः!" इति उद्गारं प्रकटितवान्।

एवं विनोदस्य पिता कारागारे बद्धः



अभवत्। एतां वार्तां श्रुत्वा विनोदः अतीव दुःखितः चिन्ताकुलः च। ऋते पितरं तदीयः आत्मीयः अन्यः नास्ति। अविवेकेन दण्डयतः महाराजस्य विषये विनोदस्य कोपः आगतः। 'प्रतीकारः साधनीयः एव' इति उद्वेगेन निश्चितवान् सः।

तदा हितचिन्तकाः ज्येष्ठाः तं विवेकं बोधितवन्तः– "विनोद ! कोपावस्थायाम् उद्वेगावस्थायां च किमपि न करणीयम्। महाराजः तु समर्थः। अल्पः भवान् राजानं किं वा कर्तुं शक्नुयात्? पितुः इदानीं या अवस्था सा एव भवेत् भवतः अपि। अतः शान्तः सन् पितुः विमोचनं प्रथमं चिन्तयतु" इति।

किन्तु एकवर्षाभ्यन्तरे विनोदस्य पिता कारागारे एव मरणं प्राप्तवान्।



एतां वार्तां श्रुत्वा दिग्भ्रान्तः राजा महाज्ञानिनः आहूय– "सहस्रवर्षात्मकं दण्डनं विहितम् आसीत्। किन्तु एषः एकवर्षाभ्यन्तरे एव मरणं प्राप्तवान्। नवनवत्युत्तरनवशतवर्षाणां (९९९) दण्डनस्य का गतिः?" इति चिन्तापूर्णस्वरेण पृष्टवान्।

तदा एकः महाज्ञानी उक्तवान्– "महाराज! अत्रापि सरलः तर्कः। यथा सम्पत्तेः उत्तराधिकारी पुत्रः भवति तथैव कारागारदण्डनस्य अपि उत्तराधिकारी पुत्रः एव भवेत्" इति।

"युक्तम् एतत्। तदीयं पुत्रम् अद्यैव बद्ध्वा कारागारे स्थापयन्तु" इति आज्ञापितवान् राजा।

विलक्षणाम् एताम् आज्ञां विनोदः अपि श्रुतवान्। भटेभ्यः आत्मानं रक्षन् सः तत्क्षणे एव अरण्यं प्रविष्टवान्।

अरण्यप्राप्तिसमये अन्धकारः व्याप्तः आसीत्। किन्तु वृक्षलतागुल्मादीनां मध्ये सञ्चारः तु विनोदस्य सहजः आसीत् खलु? अतः सः सलीलम् अग्रे गच्छन् एकं शिथिलं भवनं प्राप्तवान्। भवनस्य पार्श्वे एकस्याः शिलायाः उपरि उपविष्टवान् च।

अत्रान्तरे चन्द्रोदयः जातः। शीतलाः चन्द्रकिरणाः सर्वत्र प्रसृताः। आह्लादकरः परिसरः आसीत् सः। पितुः मरणम् एव चिन्तयन् विनोदः श्रान्तिवशात् तत्रैव निद्रां प्राप्तवान्।

पुनः कदाचित् विनोदः जागरितः अभवत्। तत्प्रदेशे उज्ज्वला कान्तिः आसीत् तदानीम्। सा तु कौमुदी न, यतः चन्द्रः आकाशे न आसीत् तदा।

'शिलामये अस्मिन् प्रदेशे का इयं कान्तिः? कुतः आगच्छति सा?' इति जिज्ञासा उत्पन्ना विनोदस्य मनसि।

सा कान्तिः कस्याश्चित् गुहातः प्रसरति स्म। एषः उत्थाय गुहायाः समीपं गतवान्। अन्तः दृष्टिः यदा प्रसारिता तदा तेन दृष्टं यत् गुहायां कमलहस्तः कश्चन सुन्दरः सुवर्णमयः स्त्रीविग्रहः स्थितः अस्ति! विनोदः आश्चर्येण विग्रहम् एव दृष्टवान् अस्ति।

अत्रान्तरे विनोदः बाल्ये श्रुतां किंवदन्तीं

स्मृतवान्। 'एषः सुवर्णमयः स्त्रीविग्रहः तत्काले शिल्पकलायां चतुरेण म्हाराजेन निर्मितः एव स्यात्। तदानीं भूकम्पवशात् भूमौ लीनः एषः विग्रहः इदानीं पुनरपि भूकम्पवशात् दृष्टिगोचरः जातः अस्ति' इति आलोचितवान् सः।

विनोदः परीक्षादृष्ट्या विग्रहं पुनः परिशीलितवान्। 'एतादृशी आकृतिः इतःपूर्वं मया कुत्रापि दृष्टा खलु!' इति भावना उत्पन्ना तस्य मनसि। किन्तु कुत्र इति सः स्मर्तुं न शक्तवान्। स्वराज्ये तु तादृशं दर्शनम् असाध्यम् एव। यत्र विक्षिप्तः महाराजः शासनं करोति तत्र कलायाः प्रोत्साहः कथं भवेत्? कलाप्रोत्साहाभावे सुन्दरशिल्पस्य निर्माणम् अपि असाध्यम् एव खलु?

विनोदः द्वित्राणि पदानि अग्रे गत्वा सुवर्णविग्रहं हस्तेन स्पृष्टवन्। अवर्णनीयम् आनन्दम् अनुभूतवान्। आनन्दपरवशः सः विग्रहस्य हस्ते स्थितं कमलम् अपि स्पृष्टवान्।

तत्समये एका आश्चर्यकरी घटना प्रवृत्ता। विग्रहस्य अङ्गुल्यां स्थितम् अङ्गुलीयकं विनोदस्य अङ्गुल्याम् आगतम्। एतया घटनया चकितः सः एतस्य कारणं चिन्तयन् तत्रैव उपविष्टवान्।

तत्समये कश्चनः गम्भीरः कण्ठस्वरः तेन श्रुतः– "एतस्मिन् विग्रहे जीवावाहनस्य रहस्यं ज्ञातुम् इच्छति वा?" इति।

"आम्, अवश्यं ज्ञातुम् इच्छामि" इति उत्साहेन उक्तवान् विनोदः।

"तर्हि एतस्य विग्रहस्य रक्षणार्थं योग्यां व्यवस्थां कृत्वा पार्श्वस्थस्य जलपातस्य समीपं गच्छतु। ततः समीपे एव गुहा अस्ति। गुहायाः अतिक्रमणानन्तरं भवान् नूतने प्रदेशे काञ्चित् देवतां पश्यति। सा विग्रहोज्जीवनरहस्यं बोधयति। 'उज्जीविता एषा सुन्दरी एव मया परिणेतव्या। तादृशेन वरेण अनुगृहणातु' इति तां देवीं प्रार्थयतु" इति असूचयत् सः कण्ठस्वरः।

(अनुवर्तते)






# धर्मस्य जयः

अचेतनं शवम् आश्रित्य स्थितः, चेतनानाम् अपेक्षया अपि अधिकक्रियाशीलः वेतालः वृक्षस्य शाखायां लम्बमानः त्रिविक्रमस्य प्रतीक्षायाम् आसीत्। त्रिविक्रमः तु यथापूर्वं मौनं गत्वा वृक्षम् आरूढवान्। वृक्षतः शवम् अधः अवतार्य स्कन्धे आरोप्य श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! अहं यथा चिन्तितवान् तथैव भवान् पुनः आगतवान् एव। भवतः धैर्यसाहसादिकं प्रशंसायोग्यम्। प्रबला इच्छा यदि स्यात् तर्हि कार्यसाधनं न क्लेशाय। एवं साधितं कार्यं कदाचित् निष्फलम् अपि भवेत्। तदा न स्वार्थलाभः, न वा परोपकारः। महिमशालिनः गन्धर्वाः अपि कदाचित् एवं निष्फलतां प्राप्नुवन्ति। अत्र उदाहरणरूपेण चित्ररथनामकस्य गन्धर्वस्य कथां श्रावयामि। श्रद्धया कथां शृणोति चेत्

## वेतालकथा



मार्गायासः एव भवता न ज्ञायेत" इति।

अनन्तरं वेतालेन कथा आरब्धा–

"चित्ररथः नाम गन्धर्वः भूलोकस्य सौन्दर्यं बहुधा श्रुतवान् आसीत्। 'एतत् अपूर्वं सौन्दर्यं जन्मनि एकवारं द्रष्टव्यम् एव' इति सः कदाचित् मनसि निश्चितवान्। तदनुगुणं भूलोकसञ्चारार्थं प्रस्थितवान् च।

सः गन्धर्वः समुद्रस्य, पर्वतानां, वनानां, नगराणां च सौन्दर्यम् आस्वादयन् आकाशमार्गेण सञ्चरन् आसीत्। एवं गच्छन् सः एकं सुन्दरम् उद्यानं दृष्ट्वा अवतीर्य इतस्ततः सञ्चरितुम् आरब्धवान्।

उद्याने सञ्चरन् सौन्दर्यम् आस्वादयन् सः चित्ररथः लतामण्डपस्य समीपम् आगतवान्। तत्र अपूर्वकान्तिमत्यः काश्चन युवत्यः तेन दृष्टाः। तासां युवतीनां मध्ये सौन्दर्यस्य मूर्तिमती इव स्थिता काचित् तरुणी आसीत्। अपूर्वम् एतत् सौन्दर्यं दृष्ट्वा स्तब्धः चित्ररथः निर्निमेषदृष्ट्या तां पश्यन् आसीत्।

तां पश्यन् एव चित्ररथः मन्दं तासां समीपं गतवान्। अकस्मात् प्रविष्टं तं पुरुषं दृष्ट्वा ताः युवत्यः आश्चर्यचकिताः। एतत्सर्वम् अविगणयन् चित्ररथः तस्याः अनुपमसुन्दर्याः समीपं गत्वा पृष्टवान्– "अहं गन्धर्वः। चित्ररथः इति मम नाम। लोके गन्धर्वलोकवासिनः एव सुन्दराः इति ख्यातिः अस्ति। किन्तु भवादृशीं सुन्दरीम् अहं गन्धर्वलोके अपि न दृष्टवान्। का भवती? किं नाम? कस्मिन् देशे जाता?" इति।

एतं प्रश्नं श्रुत्वा सा सुन्दरी स्वसख्याः कर्णे किमपि उक्तवती। तदा सा सखी गन्धर्वम् उक्तवती– "भोः, एषा एतस्य शरच्चन्द्रपुरराज्यस्य युवराज्ञी। नन्दादेवी इति एतस्याः नाम" इति।

"आकारसदृशं नाम। अहम् एतां गन्धर्वलोकं नयामि" इति उक्तवान् चित्ररथः।

किन्तु सा रमणी निराकारपूर्वकं शिरः चालितवती। "भवती अङ्गीकरोतु वा मा वा, भवतीं नयामि एव" इति वदन् चित्ररथः नन्दादेव्याः हस्तं गृहीतवान्।

भीता नन्दादेवी तत्क्षणे उच्चैः चीत्कारं कृतवती। चीत्कारं श्रुत्वा धावन् आगतः रक्षकभटः चित्ररथं मारयितुं खड्गम् उन्नीतवान्।

तदा चित्ररथः उच्चैः हसन्– "भोः, मा प्रमाद्यतु, तिष्ठतु। मम नैजं स्वरूपम् अजानन् भवान् खड्गप्रहारार्थम् उद्युक्तः। सत्यं खलु?" इति पृष्टवान्।

"भवान् यः कोऽपि भवतु नाम। युवराज्ञ्याः रक्षणार्थं नियुक्तः भटः अहम्। युवराज्ञीं बलात्कारेण स्पृशन् अपरिचितः भवान् यः कोऽपि भवतु नाम, भवतः बन्धनं मम कर्तव्यम्" इति दृढस्वरेण उक्त्वा खड्गम् उन्नीय अग्रे आगतवान् सः भटः।

तदा चित्ररथः उग्ररूपं धृत्वा– "अये नराधम! गन्धर्वस्य मम उपरि खड्गप्रहारं कर्तुम् इच्छति वा? युक्तं दण्डयामि भवन्तम्। अये अल्पमानव! भवतः हस्तः कर्तितः भवतु। भवान् हस्तहीनः भवतु" इति शापं दत्तवान्।

किन्तु चित्ररथः यथा चिन्तितवान् तथा शापः न फलितः। भटेन प्रयुक्तः खड्गः चित्ररथस्य कण्ठस्य समीपे एव आगतः। आश्चर्यचकितः चित्ररथः नन्दादेव्याः हस्तं त्यक्त्वा विद्युद्वेगेन अदृश्यः अभवत्।

'सामान्याय भटाय दत्तः शापः अपि विफलः जातः' इत्यतः चित्ररथः चकितः खिन्नः च। भूलोकस्य किम् एतत् वैशिष्ट्यम्! इति आश्चर्यम् अनुभवन् सः अग्रे गतवान्।



सञ्चारं कुर्वन् प्रकृतिरमणीयतां पश्यन् चित्ररथः सायङ्कालसमये एकम् अरण्यं प्राप्तवान्। यदा सः किञ्चिद्दूरम् अग्रे गतवान् तदा गुहातः निर्गच्छन् उज्ज्वलः प्रकाशः तेन दृष्टः। सः गुहायाः समीपं गतवान्। गुहायाः मध्ये कश्चन मणिः आसीत्। तस्मात् मणितः एवं प्रकाशः निस्सरति स्म।

एतादृशम् उज्जलं मणिं चित्ररथः इतःपूर्वं न दृष्टवान् आसीत्। 'एतम् अपूर्वं मणिं नीत्वा गन्धर्वराजाय उपायनरूपेण दास्यामि' इति आलोचयन् चित्ररथः गुहां प्रविष्टवान्। अत्रान्तरे भीकरः कण्ठस्वरः तेन श्रुतः– "कः भोः? अक्रमप्रवेशं कुर्वन् कः भवान्?" इति।

चित्ररथः किञ्चिदपि भीतिम् अप्राप्नुवन् उक्तवान्– "एषः उज्ज्वलप्रकाशकः अपूर्वः मणिः मह्यम् अरोचत। एतं स्वीकर्तुम् अहम् उद्युक्तः। गन्धर्वस्य मम अक्रमप्रवेशः कथम्? सर्वत्रापि गन्तुम् अहम् अर्हः। मम गमनं निरोद्धुं कः वा समर्थः?" इति।

"परसम्पत्तेः अपहरणार्थम् उद्युक्तः गन्धर्वः वा भवतु, यक्षः वा भवतु, सः अपराधी एव। भवादृशः दुष्टः सजीवं न त्यक्तव्यः" इति वदन् कश्चन घोरराक्षसः चित्ररथस्य समीपम् आगतवान्।

चित्ररथः अट्टहासपूर्वकम् उक्तवान्– "अये राक्षसाधम! अपूर्वशक्तिशालिनं मां किं वा कर्तुं शक्नोति? भवतः हितार्थम् एव वदामि– एतं मणिं स्वहस्ततः मह्यं दत्त्वा क्षमां प्रार्थयतु प्रथमम्" इति।

एतत् श्रुत्वा सः राक्षसः उच्चैः हुङ्कुर्वन्– "अये, आत्मप्रशंसापर गन्धर्व! भवान् आत्मनः अन्तिमक्षणान् गणयतु। मुष्ट्या भवन्तं मर्दयिष्यामि" इति उक्त्वा पदद्वयम् अग्रे आगतवान्।

चित्ररथः झटिति आकाशे उत्प्लुत्य– "अये राक्षस! चलने असमर्था पाञ्चालिका भवतु भवान्" इति शप्तवान्।

सः शापः व्यर्थः जातः। राक्षसः यथापूर्वम् आसीत्। चित्ररथः पुनः अपि आश्चर्यम् अनुभवन् 'प्रायः मम शापः भूलोकवासिनां विषये किमपि परिणामं न जनयति' इति आलोचितवान्।

यदा सः ततः अग्रे गतवान् तदा एकत्र



पिपासया पीड्यमानः मरणान्तिकवेदनया क्रन्दन् कश्चन वृद्धः तेन दृष्टः। समीपे कुत्रापि जलं स्यात् वा इति चित्ररथः परितः दृष्टवान्। किन्तु समीपे कुत्रापि जलं न दृष्टम्।

एवं जलस्य अन्वेषणं कुर्वन् चित्ररथ वृक्षस्य अधः उपविश्य तपः आचरतः कस्यचित् संन्यासिनः समीपं गतवान्। संन्यासिनं नमस्कृत्य पृष्टवान् च– "श्रीमन्! समीपे एव कश्चन वृद्धः पिपासया मरणावस्थायाम् अस्ति। भवतः कमण्डलौ स्थितं जलं किञ्चित् ददाति वा?" इति।

मुनिः नेत्रे उन्मील्य चित्ररथं कोपेन पश्चन्– "अये दुरहङ्कारिन्! मम ध्यानस्य भङ्गं कृतवान् खलु। अपराधानुगुणं दण्डम् अनुभवतु" इति वदन् कमण्डलौ स्थितं जलम हस्ते स्वीकृतवान्।

तत् दृष्टवा चित्ररथः विनयेन– "महास्वामिन्! क्षन्तव्यः अहम्। मरणावस्थायां स्थितस्य वृद्धस्य निमित्तम् अहं भवतः ध्यानस्य भङ्गं कृतवान्। आत्मनः निमित्तं मया जलं न प्रार्थितम्" इति।

"कारणं यत्किमपि भवतु नाम। मम ध्यानस्य भङ्गः तु भवता कृतः एव। कृतस्य अपराधस्य निमित्तं दण्डनम् अनुभोक्तव्यम्" इति वदन् सः मुनिः कमण्डलोः जलं चित्ररथस्य उपरि सिक्तवान्। "मूकः भवतु भवान्" इति तं शप्तवान् च।

चित्ररथाय दत्तः मुनेः शापः व्यर्थः एव



जातः। चित्ररथः मुनेः अहङ्कारं दृष्ट्वा कोपम् अनुभवन् वामहस्तं वायौ चालयन्– "तपसि निरतः अपि भवान् निर्दयं व्यवहरति। अतः शिलारूपतां प्राप्नोतु" इति शापं दत्तवान्।

अपरक्षणे मुनिः शिलारूपतां प्राप्तवान्।

गन्धर्वः ततः परम् अपि भूलोके सञ्चारं कर्तुम् अनिच्छन् स्वलोकं प्रति गतवान्।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! गन्धर्वः चित्ररथः सामर्थ्यवान् इत्यत्र विप्रतिपत्तिः एव नास्ति। तथापि भटस्य विषये राक्षसस्य विषये च तदीयः शापः व्यर्थतां गतः। किन्तु तपसि लीनः मुनिः तस्य शापस्य आहारः जातः। एवं तर्हि किं तस्य मुनेः अपेक्षया अपि भटः राक्षसश्च श्रेष्ठौ? यदि न स्यात् तर्हि कथं वा मुनिः शिलारूपतां प्राप्तवान्? कथं वा तौ द्वौ यथापूर्वं स्थितवन्तौ? एतेषां प्रश्नानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "चित्ररथः सामर्थ्यवान् इति तु सत्यम् एव। किन्तु सः स्वकीयं शापसामर्थ्यं पूर्वतनप्रसङ्गद्वये अपि स्वार्थाय उपयोक्तुम् इष्टवान्। प्रथमे सन्दर्भे चित्ररथः बलात्कारकर्ता, भटः च कर्तव्यनिरतः। अतः भटः एव जयं प्राप्तवान्। द्वितीये सन्दर्भे अपि गन्धर्वः अपहारकः, राक्षसः च रक्षकः। अत राक्षसस्य जयः। तृतीयः सन्दर्भः एतस्मात् सर्वथा भिन्नः आसीत्। दयावशात् गन्धर्वः वृद्धस्य प्राणान् रक्षितुम् उद्युक्तः। मुनिः तु अहङ्कारवशात् अनपराधिनं शपन् अधर्ममार्गम् आश्रितवान्। अतः मुनेः शापः व्यर्थः जातः। गन्धर्वस्य शापः फलितः। एवं सर्वत्रापि धर्मस्य जयः। धर्ममार्गे स्थितः दुर्बलः चेदपि तस्य जयः। अधर्ममार्गे स्थितः प्रबलः चेदपि तस्य अपजयः" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।






# विदूषकपदवी

कोसलदेशस्य राजा शैलेन्द्रवर्मा। कदाचित् सः आस्थानविदूषकस्य शकटस्य विषये कुपितः अभवत्। कोपेन सः शकटं सम्यक् तर्जितवान्। ''इतःपरं मह्यं भवतः मुखं न प्रदर्शयतु'' इति उक्त्वा तम् आस्थानतः बहिः प्रेषितवान् च।

तद्दिने एव विदर्भदेशस्य विदूषकः दामोदरः शैलेन्द्रवर्माणं द्रष्टुम् आगतवान्। तस्य व्यवहारेण महाराजः सन्तुष्टः। अतः राजा चिन्तितवान् यत् दामोदरः एव आस्थानविदूषकत्वेन नियोजनीयः इति।

शैलेन्द्रवर्मा मन्त्रिणं मङ्गलेशम् आहूय स्वकीयम् आशयं निवेदितवान्।

तदा मन्त्री मङ्गलेशः उक्तवान्– ''प्रभो! विदूषकः शकटः कदाचित् भवन्तं कोपयति। पुनः कदाचित् चमत्कृतिपूर्णैः वचनैः सन्तोषयति च। एवम् इतःपूर्वम् अपि बहुवारं प्रवृत्तम्। अतः शकटस्य निष्कासनम् उचितं न इति मम अभिप्रायः'' इति।

शैलेन्द्रवर्मा मन्त्रिणः वचनं मौनं श्रुतवान्। कामपि प्रतिक्रियां न प्रदर्शितवान्।

मन्त्री मङ्गलेशः शकटं दृष्ट्वा महाराजस्य चिन्तनं निवेदितवान्।

अनन्तरदिने मन्त्री राजा च कस्मिंश्चित् विषये चर्चां कुर्वन्तौ आस्ताम्। तदा शकटः कृष्णवर्णीयेन वस्त्रेण स्वकीयम् मुखम् आच्छाद्य महाराजस्य समीपम् आगतवान्। महाराजः तस्य परिचयं प्राप्य– ''शकट! कः अयं वेषः भवतः?'' इति पृष्टवान्।

तदा शकटः उक्तवान्– ''महाप्रभो! ह्यः भवान् माम् उक्तवान् यत् मुखं न प्रदर्शयतु इति। सम्भाषणं न करणीयम् इति तु न । आस्थानविदूषकपदव्याम् अन्यः नियोजनीयः इति महाराजः चिन्तयन् अस्ति इति अहं

''सभद्रा''

श्रुतवान्। इदानीम् अहं निष्कासितः चेत् निराधारः भविष्यामि। अतः आस्थानविदूषकपदवीतः अहं न निष्कासनीयः इति सविनयं प्रार्थयामि" इति।

शकटस्य स्वरूपं दृष्ट्वा आगच्छन्तं हासं बलात् निरुध्य महाराजः उक्तवान्– "विदर्भदेशात् आगतः विदूषकः दामोदरः अस्माकम् आस्थानविदूषकपदवीम् अलङ्कर्तुम् अर्हः इति भावना आगता अस्ति मम मनसि। किन्तु स्वस्थानरक्षणार्थं भवते एकस्य अवकाशस्य दाने मम तु आक्षेपः नास्ति" इति।

"अनुगृहीतः अस्मि। एतदर्थं मया किं करणीयम् इति महाप्रभुः मां सूचयतु" इति विनयेन प्रार्थितवान् शकटः।

"तर्हि शृणोतु,श्वः भवता राजसभायां दामोदरस्य समीचीना प्रशंसा करणीया। किन्तु आत्मनि हीनभावः अपि न आरोपणीयः। एवं कर्तुं भवान् शक्नोति चेत् भवतः विदूषकपदवी रक्षिता भविष्यति" इति उक्तवान् शैलेन्द्रवर्मा।

अनन्तरदिने राजसभायां विदर्भदेशस्य विदूषकस्य दामोदरस्य स्तुतिं कुर्वन् उक्तवान्– "दामोदरस्य पाण्डित्यम् असदृशम्। राजा मत्सदृशम् अन्यम् उत्तमं कमपि आस्थानविदूषकस्थाने नियोजयितुम् यदि इच्छेत् तर्हि तदर्थं योग्यः दामोदरः एकः एव। किन्तु तथा नियोजनं तु देशप्रेम्णः प्रश्नः" इति।

'शकटस्य स्थाने अन्यस्य नियोजनस्य का आवश्यकता' इति सभ्याः न ज्ञातवन्तः। राजा आलोचितवान्– 'शकटः बुद्धिमत्तया उक्तवान्। दामोदरं श्रेष्ठं वदन् तं स्वसदृशं सूचयन् आत्मनः श्रेष्ठत्वम् अपि निरूपितवान्। देशप्रेम्णः प्रस्तावं कुर्वन् अहम् अन्यं नियोजयितुं यथा न शक्नुयाम् तथा कृतवान्' इति।

अनन्तरं सः तं शकटं पारितोषिकदानेन सत्कृतवान्। दामोदरम् अपि उपायनैः सन्तोष्य प्रेषितवान्।



अस्माकं देशस्य वैशिष्ट्यानि–

# माण्डू दुर्गम्

१६१८तमे वत्सरे माण्डूप्रदेशस्य सौन्दर्यं दृष्ट्वा जहाङ्गीरमहोदयः लिखति यत् हरिद्वर्णोपेतस्य रमणीयैः वनपुष्पैः अलङ्कृतस्य माण्डूपर्वतस्य अनुपमं सौन्दर्यं कथम् अहं वर्णैः वर्णयामि? इति। मध्यप्रदेशराज्यस्थे सुन्दरे एतस्मिन् स्थले मारवाडशासकाः १३ शतके दुर्गं निर्माय 'मण्डपदुर्गम्' इति तस्य नाम निश्चितवन्तः। तदेव नाम 'माण्डू' इति जातम्।






कश्चन कृषिकः यदा भूमिं खनन् आसीत् तदा अल्पया शिलया घट्टितं खनित्रं सुवर्णमयं जातम्! कृषिकः शिलायाः माहात्म्यं यावत् जानाति ततःपूर्वम् एव तस्याः शिलायाः माहात्म्यं जानन् कश्चन लोहकारः कृषिकसमीपम् आगत्य तां शिलाम् उपायेन नीतवान्।

सः लोहकारः महिमान्वितायाः तस्याः शिलायाः आधारेण सुवर्णं प्राप्नुवन् अल्पे एव काले महाधनिकः जातः। अनन्तरं सः तां शिलां महाराजाय जयसिंहाय अर्पितवान्। तस्याः शिलायाः प्रभावेण सम्पादितया सम्पत्त्या एव राजा माण्डूदुर्गं निर्मितवान् इति श्रूयते।





अल्पे एव काले राजा अपि शिलया प्राप्तया सम्पत्त्या तृप्तः अभवत्। एकदा सः नर्मदानद्याः तीरे स्वसमीपे स्थितं सुवर्णं रत्नादीन् च याचकेभ्यः दत्तवान्। दानकार्यक्रमस्य अन्ते पुरोहिताय तां महिमान्वितां शिलां दत्तवान्। शिलायाः वैशिष्ट्यकथनतः पूर्वम् एव सः असन्तुष्टः पुरोहितः तां शिलां नद्यां क्षिप्तवान्।

एवं सा महिमान्विता शिला नद्यां निमग्ना। कालवशात् तेन राज्ञा निर्मितं तत् दुर्गं शिथिलं जातम्। माल्वा पालकत्वेन आगतः बाज् बहादूर् अत्रत्यानि कानिचन भवनानि समीकारितवान्। तत्प्रान्ते स्थितायां रूपवत्यां राजा आसक्तः जातः। रूपवत्याः राज्ञः च सङ्गीते समाना आसक्तिः। उभौ अपि सङ्गीतशास्त्रपारङ्गतौ च।






यदा बाज् बहादूर् रूपवत्याः पुरतः विवाहेच्छां प्रकटितवान् तदा सा उक्तवती– "अहम् आत्मानं नर्मदानद्याः पुत्रीं भावयामि। अतः नर्मदायां स्नानं विना एकं दिनम् अपि स्थातुं न शक्नोमि" इति। पर्वतस्य उपरि नद्याः नयनं कथं शक्यते? बाज् बहादूर् नदीं श्रद्धया प्रार्थितवान्।

एकदा रात्रौ सुप्तस्य बाज् बहादूरमहोदयस्य स्वप्ने नर्मदादेवी प्रत्यक्षीभूय उक्तवती– "पर्वते तिन्त्रिणीवृक्षस्य मूले खननं करोतु। तदा अहं निर्झररूपेण प्रत्यक्षा भवामि" इति। एतदनुगुणं राजा यदा तिन्त्रिणीवृक्षमूले खानितवान् तदा शीतला जलधारा उपरि उद्गता। एवम् उत्पन्नः 'रिवाकुण्ड' नामकः कूपः इदानीम् अपि तत्र दृश्यते।





अकबरः माल्वादेशस्य उपरि आक्रमणं कृतवान्। सङ्गीतासक्तः बाज् बहादूर् युद्धे अकबरं सम्मुखीकर्तुं न शक्तवान्। रूपवती अग्नौ आत्मानं समर्पितवती। तस्याः वासभवनम् इदानीम् अपि सुस्थितौ अस्ति।

कालप्रवाहस्य आघातेन अपि विशेषविकृतिम् अप्राप्तम् अन्यत् भवनं– 'जहाज् महल्'। प्रशान्ते परिसरे प्रकृतेः सुमनोहरे अङ्के विराजमानम् एतत् भवनं गतकालस्य वैभवस्य साक्षिभूतम् अस्ति।






बाज् बहादूर् स्वकीयानि अन्तिमदिनानि अकबरस्य आस्थाने एव यापितवान्। तदीया अपूर्वा सङ्गीतप्रतिभा अकबरे आदरभावस्य उत्पादनम् अकरोत्। तथापि बाज् बहादूर् हस्तच्युतं माण्डूदुर्गं, लोकान्तरगतां प्रेयसीं च अहर्निशं स्मरन् सदा चिन्ताक्रान्तः भवति स्म।




# कुब्जस्य निश्रेणी

मलयगिरिराज्यं महेन्द्रपालः नाम राजा पालयति स्म। एकदा यदा सः राजसभायाम् आसीत् तदा कश्चन श्मश्रुलः कुब्जः वृद्धः एकां निश्रेणीं स्कन्धे आरोप्य राजसभां प्रविष्टवान्। महाराजं नमस्कृत्य "मां रक्षतु महाप्रभो!" इति विनयेन प्रार्थितवान् सः।

"किं कष्टम् आपतितम् इति प्रथमं निवेदयतु। रक्षणभारम् अहं निर्वक्ष्यामि" इति उक्तवान् महेन्द्रपालः।

तदा कुब्जः वृद्धः उक्तवान्– "प्रभो! महता परिश्रमेण अहम् एतां विशिष्टशक्तिशालिनीं निश्रेणीं सम्पादितवान् अस्मि। एताम् अपहृत्य एतद्द्वारा यथेष्टं धनं सम्पादनीयम् इति आलोचयन् चोरः गजराजः माम् अनुसरन् अस्ति। तस्मात् चोरतः मां रक्षतु महाप्रभो!" इति।

महेन्द्रपालः दुर्गस्य अन्तः एव वृद्धस्य वसत्यर्थं व्यवस्थां कृतवान्। तदीयगृहस्य रक्षणार्थं द्वौ भटौ अपि नियोजितवान्।

चोरः गजराजः एतां वार्तां श्रुतवान्। वेषान्तरेण दुर्गस्य अन्तः प्रविष्टवान् च। वृद्धस्य वसतिं-प्रवेष्टुम् अपि प्रयत्नं कृतवान्। प्रवेशप्रयत्नः तु सफलः, किन्तु निश्रेणीं चोरयितुं सः न शक्तवान्। अतः सुलभलभ्यानि अमूल्यवस्तूनि चोरयित्वा सः ततः पलायितवान्। चौर्यस्य अनन्तरं भटाः गजराजस्य आगमनं ज्ञातवन्तः। किन्तु तं बद्धुं ते न शक्तवन्तः।

राजा महेन्द्रपालः एतां वार्तां ज्ञातवान्। 'सेवकेषु विश्वासेन प्रयोजनं नास्ति' इति आलोचयन् सः चोरग्रहणार्थं स्वयं प्रस्थितवान्। चोरम् अन्विष्य गच्छन् सः एकं पर्वतप्रदेशं प्राप्तवान्।

"अनामिका"



वस्तुतः गजराजः तत्रैव आसीत्। सः महाराजस्य आगमनं ज्ञात्वा गोपालकः इव अभिनयन् महाराजसमीपम् आगत्य उक्तवान्– "महाराज! तत्र दृश्यमानायां गुहायां रत्नानि राशिरूपेण पतितानि सन्ति। पशुपालकः अहं तावता ऐश्वर्येण किं करोमि? भवान् तु महाराजः। तत् ऐश्वर्यं भवतः उपयोगाय भवेत्, पश्यतु" इति।

एतत् श्रुत्वा राजा आश्चर्यं प्रकटयन् अश्वात् अवतीर्य गुहां प्रविष्टवान्। तदा गजराजः झटिति महाशिलया गुहाद्वारं पिधाय राज्ञः अश्वम् आरुह्य राजदुर्गम् उद्दिश्य गतवान्।

दुर्गं प्रविश्य महाराजस्य अनुजम् अनङ्गपालं दृष्ट्वा– "प्रभो! महाराजः मया अरण्ये दृष्टः। सः ऐहिकभोगविषये वैराग्यं प्राप्य संन्यासं स्वीकृतवान्। सः मद्द्वारा वार्तां प्रेषितवान् यत् इतःपरं राज्यभारः भवता एव द्रष्टव्यः इति। एतं विषयं प्रमाणीकर्तुं सः स्वकीयम् अश्वम् आरुह्य गन्तुम् अपि मां सूचितवान्" इति उक्तवान्।

महेन्द्रपालस्य अश्वस्य दर्शनेन अनङ्गपालः गजराजस्य वचने विश्वासं प्राप्तवान्। आत्मना प्राप्यमाणं राजपदवीं स्मरन् सः सन्तोषेण स्वकण्ठे स्थितं वज्रहारं गजराजस्य कण्ठे स्थापितवान्।

गजराजः तं हारं हस्तेन स्वीकृत्य पश्यन् उक्तवान्– "प्रभो! शुभवार्ताम् आनीतवते मह्यम् एषः वज्रहारः यत् दत्तः तत् उचितम् एव। एतेन सहैव अपूर्वशक्तिशालिनी निश्रेणी अपि दत्ता चेत् अहं परमसन्तुष्टः भवेयम्" इति।

विशिष्टायाः निश्रेण्याः प्रार्थनां श्रुतवतः अनङ्पालस्य मनसि सन्देहः उत्पन्नः। सः गजराजस्य बन्धनार्थं भटान् आहूतवान्। अपायप्राप्तिं ज्ञात्वा चोरः गजराजः ततः पलायितवान्।

सः साक्षात् पर्वतप्रदेशस्य गुहायाः समीपं गत्वा आच्छादकरूपां शिलाम् अपसार्य महेन्द्रपालम् उक्तवान्– "भवन्तौ सहोदरौ रामलक्ष्मणसदृशौ इति वार्ता जनानां मुखतः मया श्रुता आसीत्। तस्य परीक्षणार्थम् एव अहं भवन्तं बन्धने संस्थाप्य भवतः अनुजस्य

समीपं गतवान्। भवान् संन्यासी जातः इति मया यदा उक्तं तदा तेन महयम् एषः कण्ठहारः दत्तः। पश्यतु, भवतः सहोदरस्य प्रीतिम्" इति। अनङ्गपालेन दत्तं कण्ठहारं प्रदर्शितवान् च।

महेन्द्रपालः इदानीम् अतीव कुपितः। सः तत्क्षणे एव दुर्गं प्रति गतवान्। यदा सः अन्तःपुरं प्रति गन्तुम् उद्युक्तः तदा सः कुब्जः वृद्धः महाराजसमीपम् आगत्य उक्तवान्– "प्रभो! कोपावेशसन्दर्भे किमपि कार्यं न करणीयम्। भवान् मम वसतिम् आगच्छति चेत् एकं विचित्रं प्रदर्शयामि" इति।

विचित्रदर्शनकुतूहलेन महाराजः कुब्जस्य वसतिं गतवान्। तत्र वृद्धस्य सूचनानुसारं तां विचित्राम् निश्रेणीम् आरूह्य अट्टप्रदेशं प्राप्तवान्।

तत्र राजा एकं विचित्रं दृश्यं दृष्टवान्। तदीयः पिता मरणशय्यायाम् अस्ति। सः महेन्द्रपालं स्वसमीपम् आहूय दशवर्षीयं बालम् अनङ्गपालं प्रदर्शयन् वदति– "पुत्र! भवतः अनुजं प्रीत्या, विना लोपं च पालयतु। तेन कोऽपि दोषः आचरितः चेदपि क्षाम्यतु" इति।

महेन्द्रपालः अनङ्गपालं प्रीत्या आलिङ्ग्य पितरम् उक्तवान्– "तात! भवान् निश्चिन्तः भवतु। अनुजम् अहं प्राणसमानं पश्यामि" इति।

एतत् दृश्यं दृष्ट्वा महेन्द्रपालः अधः



आगतवान्। कुब्जं वृद्धम् उक्तवान् च– "मया कोपवशात् करिष्यमाणात् अपायात् भवत्कारणतः अनुजः रक्षितः। पित्रे दत्तं वचनं पालितम् अभवत्। भवद्विषये सन्तुष्टः अस्मि। किम् इच्छति भवान्? पृच्छतु" इति।

"प्रभो! गजराजात् मां रक्षतु इति एतावदेव मम प्रार्थना। अन्या कापि अपेक्षा नास्ति मम। एतस्याः निश्रेण्याः साहाय्येन कस्यापि शत्रुभयं यथा न स्यात् तथा कृत्वा उत्तमा कीर्तिः सम्पादनीया इत्येव मम इच्छा" इति उक्तवान् सः कुब्जः वृद्धः।

राजा क्षणकालम् आलोच्य कुब्जं वृद्धम् उक्तवान्– "शत्रवः यथा न भवेयुः तथा करणीयम् इति खलु भवतः इच्छा? एवं तर्हि शत्रुविषये सदा चिन्तनं व्यर्थं कार्यम्। भवान्

एतत्क्षणे एव दुर्गं परित्यज्य गच्छतु। तेन भवतः समस्या परिहृता भविष्यति'' इति।

कुब्जः वृद्धः 'मां इतः न प्रेषयतु' इति बहुधा प्रार्थितवान्। तथापि महाराजः तं दुर्गात् बहिः प्रेषितवान् एव।

कुब्जः वृद्धः महाराजं मनसा निन्दन् निश्रेणीं स्कन्धे आरोप्य ततः गतवान्। किञ्चिद्दूरं गमनानन्तरं चोरः गजराजः तस्य सम्मुखम् आगत्य निश्रेणीं बलात् स्वायत्तीकृत्य अरण्यं प्रति धावितवान्। कुब्जः वृद्धः चोरस्य मार्गम् एव अनुसृतवान्।

अरण्यं प्रविष्टः गजराजः निश्रेण्याः माहत्म्यं परीक्षितुम् इष्टवान्। अतः कस्मिंश्चित् वृक्षे निश्रेणीम् आलम्ब्य उपरि गतवान्। तत्र द्वौ राजभटौ उपस्थाय गजराजं दृढं गृह्णन्तौ– ''अद्यपर्यन्तं भवान् असङ्ख्यान् अपराधान् कृतवान्। तस्य दण्डनरूपेण महाराजः भवतः शूलारोपणम् आज्ञापितवान् अस्ति'' इति वदन्तौ तस्य कण्ठे रज्जुं बद्ध्वा वृक्षे तम् उत्तोलितवन्तौ।

यथा यथा रज्जुबन्धः दृढः जातः तथा तथा चोरस्य भीतिः अपि अधिका जाता। तत्समये एव कुब्जः वृद्धः तत्र आगतवान्। गजराजस्य कण्ठे बद्धां रज्जुं प्रयत्नेन निष्कास्य तम् अधः शायितवान्।

अल्पे एव काले चोरः सचेतनः जातः। 'कः मम प्राणान् रक्षितवान्' इति ज्ञातुं सः परितः दृष्टिं प्रसारितवान्। पार्श्वे एव कुब्जः वृद्धः स्थितः आसीत्।

चोरः कुब्जस्य पादयोः प्रणम्य– ''श्रीमन्! मां क्षाम्यतु। भवान् समये आगत्य मम प्राणान् रक्षितवान्। अहं नितरां कृतज्ञः अस्मि'' इति सगद्गदम् उक्त्वा सज्जनव्यवहारस्य व्रतं स्वीकृत्य ततः निर्गतवान्।

चोरस्य गजराजस्य ग्रहणार्थं महाराजः निश्रेण्याः उपयोगं यत् स्वीकृतवान् तत् दृष्ट्वा वृद्धः अतीव सन्तुष्टः। सः तां विशिष्टां निश्रेणीं महाराजाय एव दत्तवान्। राजा शाश्वताश्रयदानेन तम् अनुगृहीतवान्।






कालिन्दीनद्याः तीरे गोकुलनामकः गोपालकग्रामः आसीत्। तद्ग्रामीणानां तु गावः एव धनम्। जीवनाधारभूताः गावः ते महत्या प्रीत्या पश्यन्ति। गोसेवया आत्मनः जन्मसार्थक्यं मन्यन्ते ते। ग्रामे सदा समृद्धिः सुखसन्तोषादयः भवन्ति स्म। एतस्मिन् एव ग्रामे नन्दस्य वसतिः।

वसुदेवस्य सूचनानुसारं मथुरातः सपरिवारम् आगतः नन्दः गोकुलं प्राप्तवान्। ग्रामवृद्धाः अग्रे आगत्य तं स्वागतीकृतवन्तः। अभिनन्दनवचनानि उक्तवन्तः च।

नन्दः सर्वेषां योगक्षेमं विचार्य नामसम्बोधनपूर्वकम् एकैकेन सह अपि वार्तालापं कृतवान्। अनन्तरं तैः सह ग्रामस्य अन्तः आगतवान्।

वृद्धगोपिकाः नन्दस्य गृहम् आगत्य यशोदायाः कुशलं विचारितवत्यः। शिशुम् उन्नीय लालितवत्यः। मङ्गलगीतं गायन्त्यः उत्सवम् आचरितवत्यः। रोहिणी अपि तत्र आगतवती। नन्दः गौरवपूर्वकं तां स्वागतीकृतवान्।

इदानीं बालः कृष्णः गोकुलस्य गोप-गोपिकानां प्रीतिम् आस्वादयन् दिने दिने वर्धमानः आसीत्।

'मम मारणविषये देवतानां मध्ये चर्चा प्रचलति' इति जानन् कंसः भ्रूणहत्यार्थं शिशुहत्यार्थं च बहून् राक्षसान् नियोजितवान्।

तेषु अग्रगण्या आसीत् पूतना। तस्याः आकारः भयङ्करः, स्वभावश्च क्रूरः।



मायाविनी सा साधारणस्त्रीवेषेण रात्रौ सञ्चरन्ती शिशूनां हननं करोति स्म।

एकदा एवं शिशूनाम् अन्वेषणार्थं प्रस्थिता पूतना नन्दस्य शकटस्य अधः सुप्तायाः यशोदायाः पार्श्वे सुप्तं कृष्णं दृष्टवती। सः शिशुः इतरशिशुभ्यः भिन्नः इव तया दृष्टः। अपूर्वं विलक्षणं च तेजः शिशोः मुखे स्फुटं दृश्यते स्म।

एतम् अपूर्वं बालकं दृष्ट्वा एव पूतना चिन्तितवती यत् कंसस्य संहारार्थं जातः शिशुः प्रायः एषः एव इति।

कंससंहारकविषयकचिन्तनेन एव पूतनायाः महान् क्रोधः आगतः। दन्तान् कटकटायन्त्याः तस्याः नेत्रद्वयं रक्तवर्णीयं जातम्। भ्रूः वक्रा जाता। शरीरात् स्वेदः उत्पन्नः। श्वासोच्छ्वासस्य वेगः प्रवृद्धः।

सा झटिति अग्रे गत्वा मातुः पार्श्वे सुखनिद्रयां लीनं शिशुं बलात् आकृष्टवती। विषलिप्तं स्वकीयं स्तनं तस्य शिशोः मुखे स्थापितवती च।

कृष्णः एकवारम् उच्चैः आक्रन्दनं कृत्वा पूतनायाः स्तनं दन्तैः दष्ट्वा आकृष्टवान्। तस्याः स्तन्यं पिबन् समग्रेण बलेन तस्याः शरीरस्थान् सप्त धातून् अपि समग्रतया चूषितवान्।

पूतना विकृतस्वरेण आर्तनादं कुर्वती निजरूपेण तत्रैव पतितवती।

पूतनायाः भयङ्करम् आर्तनादं श्रुत्वा ग्रामस्थाः गोपालकाः सर्वे उत्थाय आगतवन्तः।

कृष्णस्य रोदनं श्रुत्वा यशोदा पूर्वम् एव जागरिता आसीत्। पार्श्वे शिशुम् अदृष्ट्वा सा नितरां भीता आसीत् अपि। व्याकुलस्वरेण सा नन्दम् आहूतवती। यावत् नन्दः उत्थाय यशोदायाः समीपम् आगतवान् तावता इतरे गोपालकाः अपि तत्र सम्मिलिताः।

तैः सर्वैः मृतायाः पूतनायाः शवः दृष्टः। तस्याः राक्षस्याः वक्षःस्थले अल्पः पक्षी इव स्थितः कृष्णः अपि तैः दृष्टः।

यशोदा पुत्रं दृष्ट्वा "हा पुत्र!" इति उद्गारं प्रकटयन्ती अवनम्य शिशुम् उन्नीय

दृढम् आलिङ्गितवती।

"किम् एतत्? एषा राक्षसी पूतना अत्र कथम् आगतवती? यदा सा पुत्रम् अपहरन्ती आसीत् तदा भवती किं कृतवती? किं शिशुः भवत्याः पार्श्वे न आसीत्?" इति क्रोधपूर्णस्वरेण नन्दः यशोदां पृष्टवान्।

"अहं कृष्णम् आकण्ठं क्षीरं पाययित्वा शायितवती आसम्। दीपाः तु ज्वलन्ति एव। अहं बहुकालपर्यन्तं जागरिता आसम्। यदा क्षणमात्रं नेत्रे निमीलितवती तदा एषा घटना प्रवृत्ता। एषा राक्षसी कुतः आगतवती, कृष्णं किं कर्तुम् इच्छति स्म, कथं मृता इत्यादिकम् अहं किमपि न जानामि। राक्षस्याः हस्तं गतः अपि अस्मत्पुत्रः निरापदः अस्ति इति तु पूर्वजन्मनः पुण्यफलम्। इतःपरं अस्माकं पुत्रः सहस्रं वर्षाणि जीवति" इति उक्तवती यशोदा।

महतः अपायात् कृष्णः मुक्तः अभवत् इति सर्वे गोपाः सन्तुष्टाः। सर्वे सम्भूय राक्षस्याः कलेवरं ततः निष्कासितवन्तः। नन्दः पुत्रं प्रीत्या स्वकीये अङ्के उपवेशितवान्। ग्रामज्येष्ठाः आगत्य कृष्णं मन्त्रपुरस्सरम् आशिषा अनुगृहीतवन्तः।

कृष्णः प्रतिपच्चन्द्रः इव दिने दिने वर्धमानः आसीत्।

एकदा वसुदेवः स्वकीयं पुरोहितं गर्गं रहस्यरूपेण गोकुलं प्रति प्रेषितवान्। गोकुलं प्राप्तः पुरोहितः शुभे मुहूर्ते यशोदारोहिण्योः पुत्रयोः जातकर्म-नामकरणसंस्कारं यथाविधि कृतवान्।





रोहिण्याः पुत्रस्य नाम बलरामः इति, यशोदायाः पुत्रस्य नाम कृष्णः इति च निश्चितम्। गर्गः यथा आगतवान् तथैव रहस्यरूपेण प्रतिगतवान्।

नन्दः नामकरणमहोत्सवं सवैभवं कृतवान्। ब्राह्मणेभ्यः षड्रसोपेतं भोजनं परिवेष्य गावः, सुवर्णं, वस्त्राणि च दत्तवान्। गोकुलवासिभ्यः सर्वेभ्यः मित्रबन्धुभ्यः नूतनानि वस्त्राणि दत्तवान्। गोशालाम् अलङ्कृत्य गवां पूजां कृतवान्। गोपिकाः कृष्णस्य गुणगानं कुर्वत्यः अभिनन्दनवचनानि उक्तवत्यः। गोपालकाः अपि नन्दं हार्दम् अभिनन्दितवन्तः।

पूतनायाः मरणवार्ता मथुरानगरं प्राप्नोत्। कंसस्य गुप्तचराः प्रवृत्तं समग्रं सविस्तरं निवेदितवन्तः।

समग्रं वृत्तान्तं श्रुतवतः कंसस्य संशयदृष्टिः नन्दगोपस्य पुत्रस्य कृष्णस्य उपरि केन्द्रीकृता अभवत्। 'पूतनां कश्चन शिशुः मारितवान्' इति श्रुतवतः तस्य शरीरे भीतिवशात् रोमाञ्चः उत्पन्नः। सः स्वभृत्यान् मायाविनः राक्षसान् आहूय जागरूकतावचनानि उक्तवान्।

राक्षसेषु अन्यतमः शकटनामकः गोकुलं गत्वा नन्दस्य शकटे आत्मानम् आवाह्य, शकटाकारेण स्वरूपं परिवर्त्य अवकाशं प्रतीक्षमाणः आसीत्।

यशोदा बालं कृष्णं शकटस्य छायायां शय्याशां शायितवती। निद्रितवन्तं पुत्रम् अभिमानेन दृष्ट्वा इतरगोपस्त्रीभिः सह स्नानार्थं नदीं गतवती।

तस्याः गमनानन्तरं कृष्णः अल्पे एव काले जागरितः। हस्तद्वयस्य अपि अङ्गुलीः मुखे स्थापयित्वा किञ्चित्कालं रोदनं कृतवान्। तथापि कोऽपि समीपं न आगतः।

अनन्तरं सः हस्तपादादिकम् इतस्ततः चालयन् पादेन शकटस्य चक्रं नोदयन् पातितवान्। तेन पार्श्वे वलितः शकटः अधः पतितः, छिन्नविच्छिन्नः अभवत् च।

अत्रान्तरे यशोदा स्नानं समाप्य त्वरया पुत्रसमीपम् आगतवती। तत्र रक्तसिक्तं छिन्नविच्छिन्नं च शकटं दृष्ट्वा भीत्या



आक्रोशनं कृतवती।

पुत्रम् उन्नीय दृढम् आलिङ्ग्य – "हा हन्त! पुत्रं सुप्तं दृष्ट्वा स्नानार्थं नदीं गत्वा प्रत्यागमनसमये किम् एतत् प्रवृत्तम्? एतस्य पिता मां पृच्छति चेत् किं वदेयम्? शकटः किमर्थं रक्तमयः जातः इति पृष्टं चेत् किम् उत्तरम्? अहो! किं प्रवर्तते एतत्" इति वदन्ती तत्रैव उपविश्य कृष्णं लालयितुम् आरब्धवती च।

अत्रान्तरे कार्यं समाप्य स्वेदेन आर्द्रः, धूलिधूसरः, विकीर्णकेशः नन्दः हस्ते दण्डं गृहणन् इतरगोपैः सह सम्भाषणं कुर्वन् तत्र आगतवान्। छिन्नः शकटः प्रथमं तस्य दृष्टिपथे आगतः। शकटः रक्तसिक्तः अपि इति अंशं सः अवलोकितवान्। 'प्रतिदिनं पुत्रः शकटस्य अधः शयनं करोति। शकटः रक्तसिक्तः छिन्नः च इत्यस्य अर्थः कृष्णस्य कोऽपि अपायः जातः इत्येव' इति आलोचयन् सः भीतः।

अपरक्षणे सः पत्न्याः अङ्के सन्तोषेण क्षीरं पिबन्तं पुत्रं दृष्टवान्। सः समाधानं प्राप्य दीर्घं निश्वसितवान्। "शकटः एवं कथं छिन्नविच्छिन्नः रक्तसिक्तः च जातः?" इति पत्नीं पृष्टवान् च।

'वृषभाः कोपेन शकटं पातितवन्तः स्युः वा? उत झञ्झावातकारणतः शकटः पतितः?' इति तस्य मनसि सन्देहः। सः आत्मानं समाश्वास्य पत्नीम् उक्तवान्– "प्रवृत्तं किमपि स्यात्। किन्तु आस्माकं पुत्रः कुशली। तावता अलम्" इति।

यशोदा गद्गदस्वरेण पतिम् उक्तवती– "वस्तुतः अपि दोषः मम एव। पुत्रः निद्रां कुर्यात् इति भावयन्ती शकटस्य अधः शाययित्वा स्नानार्थं नदीं गतवती। प्रत्यागमनसमये एवं प्रवृत्तम् आसीत्। दैवानुग्रहः आसीत्, अतः पुत्रः अपायात् रक्षितः" इति।

अत्रान्तरे केचन बालकाः तत्र समागत्य उक्तवन्तः– "मातः! वयम् अत्रैव क्रीडन्तः आस्म। कृष्णः जागरणं प्राप्य किञ्चित् रोदितवान्। अनन्तरं हस्तपादादिकं चालयन् शकटचक्रं पादेन ताडितवान्। तेन शकटः

पतितः। तत् दृष्ट्वा भीताः वयं सर्वे इतः धावितवन्तः" इति।

बालानां वचनं श्रुत्वा नन्दः यशोदा च आश्चर्यचकितौ।

यशोदा हस्तेन किञ्चित् मृत्तिकां स्वीकृत्य पुत्रस्य उपरि जातं दृष्टिदोषं निवार्य 'एतं चिरं रक्षन्तु' इति अष्ट दिक्पालकान् श्रद्धया प्रार्थितवती।

तत्समये तत्र सम्मिलिताः गोपालकाः प्रवृत्तां घटनां श्रुत्वा आश्चर्यं प्रकटयन्तः शकटावशेषं ततः दूरे क्षिप्तवन्तः।

दिनानि अतीतानि। कृष्णः प्रवृद्धः। सः अधोमुखं शयानः अग्रे सरति। देहलीपर्यन्तम् अपि सरन् गच्छति। यशोदा आगत्य तं पुनः स्वस्थाने स्थापयति।

केषाञ्चित् मासानाम् अनन्तरं सः अन्यस्य अङ्गुलीं गृहीत्वा स्थातुं समर्थः जातः। अन्येन आहूतः स्खलन् कानिचन पदानि स्थापयितुम् अपि सः शक्तवान्।

यः कृष्णं पश्यति सः तम् उन्नयेत् एव, यतः सः तान् तथा मोहयति। नूपुरस्य रवम् उत्पादयन् कटाक्षेण सर्वान् पश्यन् सः कुत्रापि निलीनः भवति। कृष्णस्य बाललीलां पश्यतां गोपालकानाम् आनन्दस्य सीमा एव नास्ति।

माता यशोदा प्रतिदिनं पुत्रं नवनीतं खादयति। कृष्णः नवनीतं स्वललाटे इतरत्र च लेपयन् उच्चैः हसति।

सा प्रातः कृष्णस्य खादनार्थं यथेष्टं नवनीतं



दत्त्वा पाकादिकार्यार्थम् अन्तः गच्छति।

कृष्णः तु तावता नवनीतेन अपि तृप्तिम् अननुभवन् कस्याश्चित् गोपिकायाः गृहस्य अन्तः गत्वा 'नवनीतं ददातु' इति तां पीडयति। काचित् गोपिका नवनीतं न ददाति चेत् मन्थनार्थम् अवकाशं न ददाति एषः। कोपेन वेणीं शिथिलयति, आञ्चलं गृहीत्वा आकर्षति वा।

गोपिका कदाचित् वदति– "भवान् नृत्यं प्रदर्शयति चेत् नवनीतं ददामि" इति। तदा एषः नूपुरस्य शब्दं कुर्वन् नृत्यति। गोपिका क्रियमाणं कार्यं विस्मृत्य कृष्णस्य बाललीलां पश्यति।

कृष्णः गोकुलस्य सर्वेषु गृहेषु अटति।

कदाचित् कृष्णस्य पीडया श्रान्ताः गोपिकाः वदन्ति– "एतं गृहणन्तु। नवनीतचोरं बन्धयन्तु" इति। कृष्णं यशोदायाः वशे समर्प्य आगच्छन्ति च।

यथा यथा कृष्णः प्रवृद्धः तथा तथा तदीयाः लीलाः अपि भिन्नाः भिन्नाः जाताः। कृष्णः बलरामेण इतरैः गोपबलैः च सह गोकुले अटति। कृष्णः नवनीतस्य पात्रम् अधः आनीय नवनीतं सम्यक् खादति। इतरेभ्यः अपि वितरति सः। दध्नः अपि एषा एव गतिः। अन्ते पात्रं पादेन ताडयन् शिष्टं सर्वं भूमौ पातयति। कृष्णस्य एताः चेष्टाः निरोद्धुं कोऽपि न शक्नोति।

समुद्रमथनसमये यथा मोहिनी अमृतं सर्वेभ्यः देवेभ्यः विभज्य दत्तवती तथैव कृष्णः अपि दधि-घृत-क्षीन-नवनीतादीन् गोपबालेभ्यः वितरति। दधि आस्वाद्य शिष्टे जलं योजयति। क्षीरं पीत्वा क्षीरे दधि योजयति। घृतम् अग्नौ स्थापयति। यदा अग्निः चटचटेति ज्वलति तदा एषः करताडनपूर्वकं नृत्यति।

तर्णकानां बन्धनं शिथिलीकुर्वन् क्षीरं पाययति। पुनः कदाचित् तान् धावयन् एषः हसति।

क्रीडासु सर्वासु अपि कृष्णः एव नायकः। सर्वदा जयः तु कृष्णस्य एव। पराजितस्य स्कन्धे आरुह्य एषः पीडयति। अश्वम् इव तं चालयन् प्रयाणं करोति। क्रीडायां कोऽपि वञ्चयति चेत् सम्यक् ताडयित्वा तं रोदयति। कृष्णस्य क्रीडनकौशलं तावत् आसीत् यत् अतीव समर्थः अपि कृष्णस्य पुरतः पराजयम् अङ्गीकरोति स्म।

एवं कृष्णः स्वचेष्टाभिः एकत्र गोकुलवासिनः पीडयति, अपरत्र बाललीलाभिः तेषां मनः अपहरति। कदाचित् गोकुलवासिनः कृष्णस्य चेष्टां सोढुम् असमर्थाः सन्तः असहायकतां प्रकटयन्ति। पुनः कदाचित् तदीयेषु कार्येषु अलौकिकतां पश्यन्तः आश्चर्यम् अनुभवन्ति।

(अनुवर्तते)





# ज्योतिषफलम्

यमुनानगरस्य राजा हरिकान्तः। तस्य देशस्य शत्रुभयं तु न आसीत्। अन्यच्च तस्य मन्त्री शासने अतीव दक्षः स्वामिभक्तः च। अतः महाराजः सर्वदा निश्चिन्तः।

बहूनि वर्षाणि यावत् राजा भुञ्जन्, पिबन्, सुखेन उपविशन्, नृत्यविनोदादिषु तत्परः सन् च कालं यापितवान्। अतः सः स्थूलः तुन्दिलः च जातः। उदरं तु उदभाण्डम् इव दृश्यते स्म। महाराजस्य परिस्थितिः एवं जाता यत् उत्थातुम् उपवेष्टुं च सः कष्टम् अनुभवति।

आत्मनः परिस्थितिं दृष्ट्वा महाराजः भीतः। चलनम् अपि यदा अशक्यं जातं तदा सः हताशः। सुन्दरम् अङ्गसौष्ठवयुतम् आरोग्यवन्तं पुरुषं दृष्ट्वा महाराजः चिन्तयति– 'एते कीदृशाः भाग्यशालिनः! मम शरीरम् अपि यदि एवम् एव भवेत् तर्हि कियत् समीचीनं स्यात्!' इति।

राजा मन्त्रिणः सूचितवान् यत् स्थूलतानिवारणार्थं कोऽपि उपायः चिन्तनीयः इति। मन्त्रिणः वैद्यानां साहाय्यं प्रार्थितवन्तः। वैद्याः विविधानि औषधानि दत्तवन्तः। राजा तानि सेवितनवान्। औषधानि निरर्थकानि जातानि। इदानीम् अपि अन्नपानादिषु तस्य नियन्त्रणं न आसीत्। अतः वैद्याः असहायकतां प्रकटयन्तः औषधदानं स्थगितवन्तः।

औषधसेवनेन अपि स्थूलता न अपगता इत्यतः महाराजस्य चिन्ता प्रवृद्धा। 'आरोग्यपूर्णं शरीरं द्रष्टव्यम् एव' इति निश्चित्य सः मन्त्रिणम् उक्तवान्– "यः कोऽपि मम स्थूलतां निवारयितुं यदि शक्नुयात् तर्हि तस्मै अर्धं राज्यं दातुम् अहं सिद्धः। एतां वार्तां भवान् सडिण्डिमघोषं

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



संन्यासिवेषधारी राजभवनम् आगत्य उक्तवान्– "अहं स्वचिकित्सया महाराजस्य स्थूलतां निवारयिष्यामि" इति।

तदा महामन्त्री उक्तवान्– "महाशय! भवान् महाराजाय यत् औषधं दातुम् इच्छति तत् अस्माकं पुरतः एव सज्जीकरणीयम्। महाराजस्य क्षेमदृष्ट्या एषः नियमः स्थापितः" इति।

तदा योगानन्दः उक्तवान्– "एतावता एव शक्याः सर्वे औषधोपचाराः कृताः इति अहं भावयामि। अतः औषधोपचारस्य आरम्भतः पूर्वम् अहं महाराजस्य जन्मकुण्डलीं द्रष्टुम् इच्छामि" इति।

मन्त्रिणः महाराजस्य जन्मकुण्डलीं योगानन्दाय दत्तवन्तः। योगानन्दः जन्मकुण्डलीं दीर्घकालं यावत् परिशीलयन् अन्ते उक्तवान्– "महाराजाय कस्यापि औषधस्य दानेन अन्यचिकित्सया वा किमपि प्रयोजनं नास्ति। अद्यतः त्रिंशत्तमे दिने महाराजस्य मरणं निश्चितम्। सः त्रिंशत् दिनानि केवलं जीवति" इति।

मन्त्रिणः आश्चर्यं प्रकटयन्तः प्रतिवादम् उपस्थापितवन्तः– "महाराजस्य जन्मकुण्डली इतःपूर्वं बहुभिः प्रसिद्धैः ज्योतिषिकैः दृष्टा एव। एकः अपि एतम् अंशं न सूचितवान्। ग्रहनक्षत्रादीनां परिचयः एव नास्ति भवतः" इति।

"मान्याः! अन्यैः न उक्तं चेदपि भवितव्यं

प्रसारयतु" इति।

समग्रे देशे एषा वार्ता प्रसारिता। तत्समये मन्त्रिणः अन्यम् अपि अंश योजितवन्तः। ते आलोचितवन्तः यत् राज्यलोभेन यः कोऽपि आगत्य महाराजं पीडयेत् इति। अतः ते एतं नियमं योजितवन्तः यत् यः महाराजस्य स्थूलतां निवारयिष्यति तस्मै अर्धं राज्यं दीयते, यः चिकित्सायां प्रवृत्तः सन् असफलः भविष्यति सः शूलम् आरोपयिष्यते इति। कोऽपि मरणं न इच्छति खलु? अतः महाराजस्य चिकित्सार्थं कोऽपि उत्साहं न प्रकटितवान्।

एषः उपायः अपि यदा न फलितः तदा महाराजस्य चिन्ता इतोऽपि प्रवृद्धा। एवं स्थिते एकदा योगानन्दनामकः

भविष्यति एव खलु? मम वचने भवतां विश्वासः यदि न स्यात् तर्हि मां त्रिंशत् दिनानि यावत् कारागारे स्थापयितुम् अर्हन्ति भवन्तः'' इति उक्तवान् योगानन्दः।

मन्त्रिणः योगानन्दस्य वचनम् अङ्गीकृतवन्तः, तं कारागारे स्थापितवन्तः च। कारागारे योगानन्दस्य भोजन-शयनाद्यर्थं योग्या व्यवस्था कृता आसीत्। योगानन्दस्य वचनेषु महाराजस्य हरिकान्तस्य पूर्णः विश्वासः उत्पन्नः। 'योगानन्दस्य स्वविद्यायां पूर्णः विश्वासः यदि न स्यात् तर्हि सः स्वयं कारागारवासं न अङ्गीकृतवान् स्यात्' इति महाराजस्य विचारः।

इदानीं महाराजस्य अन्या एव चिन्ता। इतःपरं त्रिंशत् दिनानि एव मम जीवनम् इति अहोरात्रं चिन्तयति सः। एषा चिन्ता आधिरूपेण परिवृत्ता अभवत्। भोजने रुचिः न दृश्यते तेन। निद्रा न आलिङ्गति तम्। मनोरञ्जककार्यक्रमेषु आसक्तिः लुप्ता।

आधिः दिने दिने वर्धते। मन्त्रिणः तम् पुनः पुनः उक्तवन्तः– ''योगानन्दस्य वचनम् असत्यम्। तदीयं वचनं न फलति'' इति। राजा एतत् सर्वं मौनं शृणोति, तावदेव।

अष्टाविंशतिः दिनानि अतीतानि। राजा इदानीं पूर्णतः शय्याम् आश्रितवान्। सः बान्धवैः मन्त्रिभिः सह वा वार्तालापम् अपि स्थगितवान्।

त्रिंशत्तमं दिनम् अपि आगतम्। राजा अस्थिचर्ममात्रः जातः। किन्तु तदीयाः प्राणाः



तु न निर्गता॥

एकत्रिंशत्तमे दिने महाराजः कस्यचित् मन्त्रशक्त्या प्रेरितः इव व्याधितः निर्मुक्तः अभवत्। सः शय्यातः उत्थाय मन्त्रिणः समीपं वेगेन गत्वा गर्जितवान्– "कुत्र सः वराकः योगानन्दः? तं कारागारतः आनीय शूलम् आरोपयन्तु" इति।

महामन्त्री योगानन्दं कारागारतः आनीय महाराजस्य पुरतः उपस्थापितवान्। योगानन्दं दृष्ट्वा महाराजः कोपेन पृष्टवान्– "अये मिथ्यावादिन्! भवान् असत्यपूर्णं भविष्यं वदन् मां सम्यक् हिंसितवान्। भवान् एव वदतु, भवतः अपराधार्थं कः दण्डः उचितः?" इति।

योगानन्दः मन्दहासं प्रकटयन् उक्तवान्– "दण्डः! अहं चिन्तितवान् आसं यत् भवान् पुरस्कारं दास्यति इति" इति।

"मम मरणं भविष्यति इति उक्त्वा मिथ्याभयम् उत्पादितवते भवते किं, पुरस्कारः दातव्यः?" इति कोपेन एव प्रतिप्रश्नं कृतवान् राजा।

"महाराज! भवता एतत् न विस्मर्तव्यं यत् अहं चिकित्सकत्वेन भवतः समीपम् आगतवान्, न तु ज्योतिषिकत्वेन। मया या चिकित्सा कृता सा तु पूर्णतः सफला एव। भवान् एव आत्मनः कृशताम् एकवारं परिशीलयतु। भवतः तुन्दिलत्वम् अपगतम्। भवान् न केवलं चलितुम्, अपि तु धावितुम् अपि शक्नोति। एतत् सर्वं किं ज्योतिषविद्यया सिध्यति, उत चिकित्साक्रमेण?" इति योगानन्दः सधैर्यम् उक्तवान्।

राजा हरिकान्तः इदानीं विवेकं प्राप्तवान्। सः झटिति उत्थाय दर्पणस्य पुरतः गत्वा स्थितवान्। सः इदानीं पूर्णतः स्वस्थः कान्तिमान् च आसीत्। तदीयः मानसिकः आधिः औषधस्य कार्यं कृतवान् आसीत्। राजा मन्त्रिणः आदिष्टवान्– "अस्माकं राज्यस्य दक्षिणदिशि पूर्वदिशि च स्थितः अर्धभागः योगानन्दस्य वशे अर्पणीयः" इति।





# अपूर्वः स्वप्नः

तुर्कीदेशे पूर्वं कदाचित् बाबरनामकः कश्चन निर्धनः आसीत्। सः सङ्कोचशीलः। अतः स्वयं गत्वा सः केनापि सह सम्भाषणं न करोति, किन्तु तस्य मनसि धनिकानाम् आकांक्षाः सर्वाः आसन्। तासां पूरणं कथम् इति सः न जानाति।

कदाचित् बाबरः कस्यचित् आपणस्य पुरतः उपविष्टः आसीत्। तदा तस्य मनसि इच्छा उत्पन्ना यत् स्नानशाला गन्तव्या, तत्र कीदृशं सुखं लभ्यते इति ज्ञातव्यं च इति।

सः साक्षात् स्नानशालां गतवान्। धृतानि वस्त्राणि निष्कासितवान्। तत्र अन्यः अपि कश्चित् आसीत्। केचन सेवकाः पानीयदानादिषु तदीयसेवासु मग्नाः आसन्।

निर्धनः बाबरः परिशीलितवान् यत् सः पुरुषः स्वस्य प्रतिरूपम् इव अस्ति। मुखम्, आकारः, औन्नत्यं, स्थौल्यं, वर्णः इत्यादयः सर्वे समानाः! 'तदीयं स्थानं मया आक्रमणीयम्' इति बाबरः निश्चितवान्। यदा सर्वे सेवकाः ततः निर्गताः तत्सन्दर्भे बाबरः तस्य समीपं गतवान्। सः पुरुषः स्नानवस्त्रं धृतवान् आसीत्। बाबरः तम् आकृष्य जलाधारे मज्जितवान्। स्वयं तदीयं स्नानवस्त्रं धृत्वा तदीये स्थाने उपविष्टवान् च। तत्समये स्नानशालायाः सेवकाः प्रत्यागतवन्तः। ते अत्यादरपूर्वकं निर्धनं बाबरं स्नापितवन्तः। अमूल्येन वस्त्रेण आच्छाद्य तं बहिः आनीतवन्तः। तत्र सेवकाः अमूल्यानि सुन्दराणि च वस्त्राणि गृहीत्वा स्थितवन्तः आसन्। तं बाबरं स्वकीयं स्वामिनं मन्यमानाः ते तानि वस्त्राणि तस्मै धारितवन्तः। अनन्तरं दीनारैः पूर्णम् एकं ग्रन्थिम् आनीय दत्तवन्तः च।

'इदानीम् एतत् किं करणीयम्?' इति

क्षणकालम् आलोचितवान् बाबरः। अनन्तरं प्रत्युत्पन्नमत्या धनिकव्यवहारं स्मरन् सः एकैकस्मै सेवकाय एकैकं दीनारं दत्तवान्। सर्वैः परिजनैः परिवृतः सः ततः बहिः आगतवान्।

तत्र तस्य निमित्तम् अश्वः सिद्धः आसीत्। सेवकाः सूचितवन्तः यत् अश्वम् आरोढुम् अर्हति भवान् इति। बाबरः अश्वारोहणं सम्यक् न जानाति। भगवन्तं स्मरन् अश्वस्य उपरि उपविष्टवान्। अश्वः परिचिते मार्गे अग्रे अगच्छत्।

एकस्य महाप्रासादस्य पुरतः अश्वः स्थितवान्। सेवकाः धावन्तः आगत्य प्रासादस्य मुखद्वारम् उद्घाटितवन्तः। हस्तसाहाय्येन तम् अधः अवतारितवन्तः च।

बाबरः प्रासादस्य अन्तः गत्वा आश्चर्येण चतसृषु दिक्षु पश्यति। तदा तत्र आगतः सेवकः पृष्टवान्– "श्रीमन्! भवान् स्वप्रकोष्ठं गच्छति, उत यजमान्याः प्रकोष्ठम्?" इति।

"अहं मम प्रकोष्ठम् एव गच्छामि" इति उत्तरितवान् बाबरः।

किञ्चित्कालानन्तरं तदीयं प्रकोष्ठम् आगतः सेवकः पृष्टवान्– "श्रीमन्! भवान् अत्र स्वप्रकोष्ठे भोजनं करोति, उत यजमान्याः प्रकोष्ठे?" इति।

"अत्रैव भोजनम् आनयतु" इति आदिष्टवान् बाबरः। भोजनसमाप्तेः अनन्तरं तत्र आगतः सेवकः पृष्टवान्– "श्रीमन्!



प्रातः आरभ्य भवान् यजमान्याः प्रकोष्ठं न गतवान्। किम् अद्य तत्र न गच्छति?" इति।

"तथा न, इदानीम् एव तत्र गच्छामि" इति उक्तवान् बाबरः।

सेवकः विनयेन तं प्रणम्य ततः निर्गतवान्।

कस्यां दिशि गन्तव्यम् इति बाबरः न जानाति। सः भीतः। किन्तु किमपि कर्तुं न शक्यते किल? सः बहूनां द्वाराणाम् उद्घाटनानन्तरम् अन्तःपुरगमनमार्गं ज्ञातवान्। यदा द्वारम् उद्घाटितं तदा यजमानी दृष्टिगोचरा जाता। सा अतीव सुन्दरी। सौकर्यार्थं वयं तस्याः नाम 'बेगं पाशा' इति भावयाम।

पतिम् आगतं दृष्ट्वा बेगं पाशा आसनात् उत्थाय स्वागतवचनानि उक्तवती। तस्य समीपम् आगतवती च। बाबरः इदानीं जडः इव सञ्जातः। तस्य पादयोः कम्पनम् उत्पन्नम्। बेगं पाशा तस्य हस्तं गृहीत्वा पर्यङ्के तम् उपवेशितवती। स्वयं पार्श्वे उपविश्य वार्तालापम् आरब्धवती च।

बेगं पाशा उक्तवती– "मम एकं कष्टं निवारयतु कृपया। परह्यः मम सखी नजमा आगतवती आसीत्। सा वार्तालापसन्दर्भे भवतः नाम पृष्टवती। शतशः प्रयत्नेन अपि अहं भवतः नाम न स्मृतवती। कृपया नामकथनेन माम् अनुगृह्णातु" इति।

इदानीं बाबरस्य पुरतः कठिना समस्या उपस्थिता। सः समस्यातः आत्मानं रक्षन् तां पृष्टवान्– "एतावन्ति वर्षाणि आवाभ्यां दाम्पत्यजीवनं यापितम्। तथापि मम नाम न



स्मरति वा भवती?'' इति।

किन्तु बेगं पाशा अनुरोधपूर्वकम् उक्तवती— ''भवता इदानीं स्वनाम वक्तव्यम् एव'' इति।

बाबरः किम् उत्तरं वक्तव्यम् इति न जानाति। मनसि यत् नाम स्फुरति तत् वदति। अन्ते 'एषः असत्यं वदन् अस्ति' इति ज्ञातवती बेगं पाशा। अतः अनन्योपायः बाबरः बेगं पाशायाः पुरतः वस्तुस्थितिं निवेदितवान्। ''मां क्षाम्यतु कृपया'' इति प्रार्थितवान् च।

''अहं क्षमां दातुं शक्नुयाम्। किन्तु चक्रवर्ती कथं वा एतत् सहेत? मम पतिः चक्रवर्तिनः धर्मोपदेशकः। सः प्रतिदिनं महाराजं धर्मतत्त्वं बोधयति। महाराजतः यस्मिन् कस्मिन् अपि समये आगन्तुम् आह्वानम् आगच्छेत्। तदा भवान् किं करोति?'' इति पृष्टवती बेगं पाशा।

तस्याः वचनं यावत् न समाप्तं तावता एव राजभटाः आगत्य निवेदितवन्तः 'महाराजः आगन्तुं सूचितवान्' इति। भीतः बाबरः बेगं पाशां प्रार्थितवान्— ''इदानीं भवत्या एव अहं रक्षणीयः'' इति।

तदा बेगं पाशा उक्तवती— ''चक्रवर्तिनः पुरतः आसनद्वयं भवति। तथैव एकः रत्नहारः अपरः सुवर्णहारः च भवति। भवान् रत्नहारं स्वयं स्वीकृत्य स्वर्णहारं हस्तेन उन्नीय महाराजं वदतु— 'अये मित्र!' इति। अनन्तरं धर्मचर्चायाः आरम्भः भवतु'' इति।

बाबरः राजभवनं प्राप्तवान्। महाराजस्य पुरतः स्थितं रत्नहारं स्वकण्ठे धृतवान्। सुवर्णहारं हस्तेन उन्नीय महाराजम् उक्तवान्— ''अये, मित्र!'' इति।

एतदनन्तरं भयकारणतः बाबरः निद्रातः जागरणं प्राप्तवान्। सः दृष्टवान् यत् आत्मना कस्यचित् आपणस्य पुरतः उपविश्य एतावत्पर्यन्तं स्वप्नः दृष्टः इति। 'धनिकस्थितिप्राप्त्यपेक्षया इदानीन्तना स्थितिः एव वरम्' इति आलोचितवान् सः। तद्दिनतः सः दारिद्र्ये अपि सुखं सन्तोषं च द्रष्टुं शक्तः अभवत्।



# कृपणस्य दानम्

धनगुप्तस्य कृषिक्षेत्रं यथेष्टम् आसीत्। ग्रामस्य मध्ये तदीयः आपणः अपि आसीत्। 'परमकृपणः' इति तस्य अपख्यातिः अपि आसीत्। एकदा सः शस्यसङ्ग्रहणकाले पत्नीम् आपणे विक्रयणकार्ये नियोज्य कृषिक्षेत्रं गतवान्।

धान्यानि एकत्र राशीकृतानि। राशीकरणानन्तरं दरिद्रेभ्यः दानरूपेण किञ्चित् धान्यं दातव्यम् इति तत्रत्यः सम्प्रदायः। धनगुप्तस्य कृपणतां जानन्तः जनाः तस्य समीपं न आगतवन्तः एव। समीपे स्थिताः कृषिकाः दानं कुर्वन्तः कटाक्षेण धनगुप्तम् एव पश्यन्ति!

एतत् दृष्टवतः धनगुप्तस्य मनसि असूया उत्पन्ना। अतः सः आत्मनः दानशीलतां प्रदर्शयितुम् इच्छन् धान्ये निस्सत्त्वानि धान्यानि योजयित्वा समीपस्थान् बालकान् आहूय तेषां हस्ते दत्तवान्।

कृपणस्य धनगुप्तस्य दानक्रियां दृष्ट्वा सर्वे कृषिकाः आश्चर्यचकिताः। ते तान् बालकान् समीपम् आहूय तेषां हस्ते स्थितानि धान्यानि परिशीलितवन्तः।

तत्र निस्सत्त्वानि धान्यानि एव अधिकानि। 'अग्रे किं करणीयम्' इति उपदिश्य ते तान् बालान् प्रेषितवन्तः।

धनगुप्तः धान्यगोणीभिः सह गृहम् आगतवान्। तदा तस्य पत्नी समीपस्थं धान्यराशिं प्रदर्शयन्ती उक्तवती– "मया अद्य अर्धेन मूल्येन धान्यानि क्रीतानि। केनचित् धार्मिकेण दानरूपेण दत्तानि इति वदन्तः बालकाः अल्पेन मूल्येन एतानि विक्रीतवन्तः" इति।

तानि धान्यानि दृष्ट्वा एव धनगुप्तः ज्ञातवान् यत् तानि आत्मना एव दानरूपेण दत्तानि इति। निरुपयुक्तानि धान्यानि धनं दत्त्वा क्रीतवत्याः पत्न्याः मन्दबुद्धितां दृष्ट्वा सः अतीव खिन्नः।






# स्थलाभावः

पार्वतीपुरे देवप्रियः नाम कश्चन कृषिकः आसीत्। सः विवेकी व्यवहारकुशलः च आसीत्। समस्यायाः परिहारसूचने सः अतीव समर्थः। अतः तेन सह समालोच्य एव ग्रामीणाः विशेषकार्यस्य आरम्भं कुर्वन्ति स्म। समीपस्थेभ्यः ग्रामेभ्यः अपि जनाः समस्यापरिहारोपायं प्राप्तुं तस्य समीपम् आगच्छन्ति स्म। तेन सूचितः परिहारोपायः सर्वदा सफलः भवति स्म।

एकदा तद्ग्रामीणः निर्धनः कृषिकः श्रीपादः देवप्रियस्य समीपम् आगत्य उक्तवान्– "भोः! एषु दिनेषु मम गृहे सर्वथा स्थलसङ्कोचः। अवकाशः अल्पः, जनाः तु बहवः। विशालं गृहं निर्मातुं मम सामर्थ्यं नास्ति। किं करणीयम् इति न जानामि। गृहे सर्वत्र वस्तूनि। अतिथीनां निमित्तं किं, गृहसदस्यानां निवासार्थम् एव तत् गृहम् अपर्याप्तम्" इति।

देवप्रियः क्षणकालम् आलोच्य पृष्टवान्– "श्रीपाद! भवान् कुक्कुटान्, अजान्, गावः च पालयति खलु?" इति।

"आम्, जीवननिर्वहणार्थं बहवः उपायाः आश्रयणीयाः भवन्ति खलु?" इति निराशया उक्तवान् श्रीपादः।

"पश्यतु भोः! स्थलसङ्कोचस्य निवारणार्थम् एकः उपायः अस्ति। आरम्भे क्लेशः भवेत्। तथापि परिणामस्तु अपूर्वः। अद्य आरभ्य भवान् एकाम् अजां तत्पुत्रान् सर्वान् च गृहस्य अन्तः एव बध्नातु। चतुर्णां दिनानाम् अनन्तरम् आगत्य परिणामं निवेदयतु" इति सूचितवान् देवप्रियः।

श्रीपादः सन्तोषेण गृहं गतवान्। देवप्रियस्य सूचनानुसारम् अजां तत्पुत्रान् च गृहस्य अन्तः बद्धवान्। गृहसदस्याः कोपेन विरोधम् उक्तवन्तः। 'चतुर्णां दिनानाम् अनन्तरम् एतस्य सत्परिणामं भवन्तः एव

पश्यन्ति' इति समाधानम् उक्तवान् श्रीपादः।

एतस्य परिणामतः गृहें स्थलाभावः प्रवृद्धः। चत्वारि दिनानि युगानि इव यापितानि। गृहसदस्याः पुनः अपि विरोधम् उक्तवन्तः। श्रीपादः याजमान्यदर्पेण कोपेन च तान् तूष्णीकान् कृतवान्।

चतुर्णां दिनानाम् अनन्तरं श्रीपादः निराशाभावेन देवप्रियस्य गृहं गतवान्।

श्रीपादं दृष्ट्वा देवप्रियः उक्तवान्– "भोः, किमर्थम् एतावती चिन्ता? आरम्भे महान् क्लेषः इति मया पूर्वम् एव उक्तं खलु? अद्य भवान् अन्यान् कांश्चन अजान् अपि गृहस्य अन्तः बध्नातु। दिनद्वयानन्तरं मां पश्यतु च" इति।

दिनद्वयानन्तरं श्रीपादः दूरतः एव हस्तौ उन्नीय नमस्कारं कुर्वन् देवप्रियम् उक्तवान्– "महोदय! इदानीं गृहे पदं स्थापयितुम् अपि स्थलं नास्ति। असह्या मानसिकी पीडा एषा। भवता सूचितम् इत्यतः सर्वं मौनं सोढवन्तः वयम्" इति।

"एवं वा?" इति पृष्ट्वा मन्दहासं प्रकटयन् देवप्रियः उक्तवान्– "अद्य तर्हि एवं करोतु। द्वितीयवारम् अन्तः आनीतान् अजान् बहिः प्रेषयतु। दिनद्वयानन्तरं परिणामं सूचयतु" इति।

दिनद्वयानन्तरम् आगतस्य श्रीपादस्य मुखे सन्तोषस्य अस्पष्टा छाया आसीत्। तं दृष्ट्वा देवप्रियः पृष्टवान्– "किं भोः! गृहे स्थलाभावः इदानीं न तथा अनुभूयते, सत्यं खलु?" इति।

"सत्यम्। इदानीं गृहे पादस्थापनार्थं वा



कश्चन अवकाशः दृश्यते'' इति उत्तरितवान् श्रीपादः।

''तर्हि अद्य भवान् सर्वान् अजान् गृहतः निष्कासयतु। चतुर्णां दिनानाम् अनन्तरम् आगत्य फलं निवेदयतु'' इति सूचितवान् देवप्रियः।

चतुर्णां दिनानाम् अनन्तरम् आगतस्य श्रीपादस्य मुखे सन्तोषस्य तृप्तेः च छाया स्फुटं दृश्यते स्म।

''इदानीं भवतः गृहे प्रायः स्थलाभावः न अनुभूयते। सत्यं खलु?'' इति मन्दहासपूर्वकं पृष्टवान् देवप्रियः।

''आम् आम्। पूर्वं तु स्थलाभावः सर्वदा मनसि खेदं जनयति स्म। इदानीं तु न तथा। मम गृहे इदानीं कोऽपि स्थलाभावसमस्यां न अनुभवति। विद्यमानेन अवकाशेन एव सर्वे सन्तुष्टाः'' इति उक्त्वा श्रद्धया नमस्कृत्य प्रतिगतवान् श्रीपादः।

गुरुराजः देवप्रियस्य गृहे सेवकरूपेण निवसति। सः आरम्भतः अपि श्रीपादस्य सम्भाषणं श्रुतवान् आसीत्। 'श्रीपादस्य वचनानि श्रुत्वा सः मनसि एव हसति स्म।

श्रीपादस्य निर्गमनानन्तरम् उच्चैः हसन् गुरुराजः देवप्रियम् उक्तवान्– ''श्रीमन्! एषः श्रीपादः सर्वथा मतिहीनः इति अहं भावयामि। पूर्वं तदीयं गृहं यथा आसीत् तथैव अस्ति इदानीम् अपि। तथापि सः पूर्वम् इव इदानीम् अपि स्थलाभावं न अनुभवति। किम् एतत् विचित्रम्!'' इति।

तदा देवप्रियः उक्तवान्– ''अत्र वैचित्र्यं किमपि नास्ति। श्रीपादस्य लोकानुभवः कोऽपि नास्ति इति तु सत्यम् एव। 'तत् नास्ति' 'एतत् नास्ति' इति जनाः चिन्तयन्ति खलु। तत्र कारणं वस्तूनाम् अभावः न, अपि तु तेषां मनोभावः। एतत् ज्ञापयितुम् इच्छन् अहं गृहे अजान् बद्धुं सूचितवान्। तत्कारणतः सः वास्तविकस्य स्थलाभावस्य परिचयं प्राप्तवान्। विद्यमाने एव तृप्तिः अनुभोक्तव्या इति विवेकः तस्मिन् उदितः च'' इति।



# प्रकृतिवैचित्र्याणि–

## 'शतपदी' शताधिकपादयुता!



'शतपदी' इत्यस्य पदस्य अर्थः शतसङ्ख्याकैः पादैः सहिता इति। किन्तु ५० पादयुगलयुताः शतपद्यः विरलाः। प्रायः सर्वासाम् अपि ततोऽप्यधिकाः एव पादाः। युरोपदेशे स्थितायाः 'हिमाण्टरम् गेब्रिलिस्' जातीयायाः शतपद्याः १७१/१७७ पादयुगलानि भवन्ति!



## विशिष्टं हिमगिरिद्वयम्

प्रपञ्चे एव अतिविशालः हिमगिरिः दक्षिणफेसिफिक्समुद्रे १९५६ तमे वत्सरे अन्विष्टः अस्ति। एतस्य वैशाल्यं १२,००० चतुरस्रं मैल्। १९५८ तमे वत्सरे ग्रीन्ल्याण्डपरिसरे अत्युन्नतः हिमगिरिः अन्विष्टः। तस्य औन्नत्यं ५५०० अङ्गुलानि।

## हम्मिङ्ग् बर्ड्



दक्षिण-अमेरिकादेशे दृश्यमानः हम्मिङ्ग् बर्ड् प्रतिसेकेण्ड् ८० वारं पक्षौ चालयति। तन्नाम सर्वेषां पक्षिणाम् अपेक्षया अधिकं बलं विनियुङ्क्ते इत्यर्थः। एषः पक्षी न केवलम् उपरि, अधः, तिर्यक्, च उड्डयते, विमुखम् अपि उड्डयते।

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अङ्गसौष्ठवम् - | Body fitness | नूपुरः - | Anklet |
| अर्जनम् - | Earning | पर्यङ्कः - | Bed |
| अवश्यम् - | Certainly | पाकशाला - | Kitchen |
| अशनिः - | Thunder bolt | पाञ्चालिका - | Doll |
| आञ्चलः - | End of a saree (Pullav) | प्रपितामहः - | Paternal great grandfather |
| आधिः - | Distress | प्रलोभनम् - | Seduction |
| उदभाण्डम् - | A vessel to store water | प्रवृत्तिः - | Hobby |
| | | बालिशः - | Childish |
| उदासीनः - | Unconcerned | भ्रूः - | Eyebrow |
| उध्वस्तम् - | Destroyed | लोष्ठम् - | Lump of mud |
| कार्यव्यापृतः - | Busy | वलितः - | Bent round |
| कुब्जः - | Hunch-back | विक्षिप्तः - | Scattered |
| कूपिका - | Bottle | विमुखम् - | Reverse |
| खनित्रम् - | Pick-axe | विहितम् - | ordained |
| चूषितवान् - | Sucked | वेणी - | Braid of hair |
| जलाधारः - | Tank | व्याधिः - | Disease |
| जिज्ञासा - | Curiosity | शकटः - | Cart |
| तर्णकः - | Calf | शतपदी - | Centipede |
| तिन्त्रिणीवृक्षः - | Tamarind tree | शस्यसङ्ग्रहणकालः - | Harvest season |
| तिर्यक् - | Sideways | शिबिका - | Palanquin |
| तुन्दिलः - | Pot-bellied | श्मश्रुलः - | Bearded |
| तृष्णा - | Greed | सन्दिहानः – | Doubting |
| देहली – | Threshold | स्तन्यम् – | Breast milk |
| निर्झरः – | Spring | स्नानवस्त्रम् – | Towel |
| निश्रेणी – | Ladder | * * | * * |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां मार्च-८८ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जनवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'नवम्बर्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **तन्मया वीक्षते स्वकार्यम्।**

द्वितीयचित्रम् - **विस्मितः पश्यति स्वरूपम्।**

प्रेषकः - मनोहरः, २०८, ४ मुख्यमार्गः, १७ उपमार्गः, विद्यारण्यपुरम्, मैसूरु-८


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३०-००

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# रत्नं रत्नेन सङ्गच्छते

नीरदा - आगच्छतु नलिनि! अये! जलजा अपि! उपविशताम्। कः विशेषः?

Hallow, come in Nalini! Come in Jalaja! Please sit down. What news?

नलिनी - जलजायाः विवाहः निश्चितः।

Jalaja's marriage is settled.

नी - अतः एव वा जलजायाः मुखं तावत् विकसितम्? महान् सन्तोषः, जलजे! भाविपतेः नाम किम्? किं करोति सः?

Oh, that is why she looks so bright, is it? I am extremely happy, Jalaja! What is the name of your would-be husband? What does he do?

न - नाम हर्षकुमारः इति। सः संस्कृताध्यापकः अस्ति।

His name is Harshakumar. He is a Sanskrit Teacher.

नी - रत्नं रत्नेन सङ्गच्छते। कदा विवाहः इति न सूचितवती एव।

Emerald matches only with Emerald. Oh, you didn't say when the marriage will take place.

न - आगामिन्यां सप्तम्यां गुरुवासरे। वेङ्कटरमणमन्दिरे विवाहः।

Coming Thursday. At the Venkatesha Temple.

नी - अल्पः कालः खलु अवशिष्टः!

Too short a time, isn't it?

न - आम्, सर्वत्र आमन्त्रणं दातव्यम्, सिद्धता अपि करणीया। अतः भवत्याः साहाय्यं प्रार्थयितुं प्रथमम् अत्र आगतवती।

Yes, wedding cards have to be distributed and preparations have also to be made. So, I came here first, to seek your help.

नी - मम साहाय्यस्य प्रार्थनं किमर्थम्? जलजा ममापि पुत्री इव। अद्य आरभ्य एव अहं साहाय्यार्थम् आगच्छामि।

Why do you have to ask for it? Jalaja is like a daughter to me. I will come straightaway to help you.


CHANDAMAMA